श्री

महाकवि कालिदासविरचितम्

# कुमारसम्भवम्

## प्रथमः सर्गः

(विशदया व्याख्यया सहित.)



रचयिता

विठलदेवुनि सुन्दरशर्मा



प्रकाशिका

**संस्कृतभाषाप्रचारिणी सभा,**

चित्तूरु - 517001

"This Book is Published with the financial assistance of Tirumala Tirupati Devasthanams, under their scheme aid to publish religious books"

विजय मुद्राशाला, चित्तूरु. पोन् 2113

श्रीसरस्वत्यै नमः

महाकवि कालिदासविरचितम्

# कुमारसम्भवम्

## प्रथमः सर्गः



1. अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः ।
पूर्वापरौ वारिनिधी विगाह्य
स्थितः पृथिव्या इव मानदण्डः ॥

अन्वय — उत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः पूर्वापरौ वारिनिधी विगाह्य पृथिव्याः मानदण्ड इव स्थितः अस्ति ।

अर्थ — उत्तरस्यां दिशि = उदीच्यां दिग्भागे, देवतात्मा = देवतास्वरूपी, हिमालयो नाम = 'हिमालय इति प्रसिद्ध', नगाधिराज = पर्वतानां अधिप (पर्वतश्रेष्ठ इत्यर्थ) पूर्वापरौ = प्राक्पश्चिमौ, वारिनिधी = समुद्रौ, विगाह्य = प्रविश्य, पृथिव्याः = भूमे मानदण्ड इव = आयामपरिच्छेदक दण्ड इव, स्थित = विराजमान, अस्ति = वर्तते ।

तात्पर्यम् — भारतवर्षस्योत्तरदिग्भागे देवतास्वरूपी हिमालयो नाम पर्वतराजः प्राक्पश्चिमौ समुद्रौ प्रविश्य पृथिव्या मानदण्ड इव विराजमानो वर्तते ।

विग्रहः — देवता आत्मा यस्य स देवतात्मा, हिमस्य आलयः, न गच्छन्तीति नगाः, नगानां मधिराजः, पूर्वश्च अपरश्च पूर्वापरौ, वारीणां निधी वारिनिधी, मीयतेऽनेनेति मानः, मानश्चासौ दण्डश्च ।

2. **यं सर्वशैलाः परिकल्प्य वत्सं**
**मेरौ स्थिते दोग्धरि दोहदक्षे ।**
**भास्वन्ति रत्नानि महौषधीश्च**
**पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥**

अन्वयः — सर्वशैलाः यं वत्सं परिकल्प्य दोहदक्षे मेरौ दोग्धरि (सति) पृथूपदिष्टां धरित्रीं भास्वन्ति रत्नानि महौषधीश्च दुदुहुः ।

अर्थः — सर्वशैलाः = सर्वे पर्वताः, यं = हिमालयं, वत्सं परिकल्प्य = वत्सत्वेन विधाय, दोहदक्षे = दोहनक्रियाचतुरे, मेरौ = मेरुपर्वते, दोग्धरि (सति) = दोहनकर्म कुर्वति सति, पृथूपदिष्टां = वैन्येन राज्ञा प्रदर्शितां, धरित्रीं = (गोरूपधारिणीं) भूमिं, भास्वन्ति = द्युतिमन्ति, रत्नानि = रत्नानि, महौषधीश्च = औषधिविशेषांश्च, दुदुहुः = अदुहन् ।

तात्पर्यम् — सर्वे शैला यं हिमालयं वत्सत्वेन विधाय दोहनक्रियायां समर्थे मेरुपर्वते दोग्धरि सति वैन्येन राज्ञा प्रदर्शितां धरित्रीं (गोरूपधरां) भास्वन्ति रत्नानि महौषधीश्चादुहन् ।

विग्रहः — सर्वे च ते शैलाश्च सर्वशैलाः । दोग्धीति दोग्धा, तस्मिन् । दोहे दक्षः दोहदक्षः तस्मिन् । महत्यश्च ताः ओषधयश्च महौषधयः, ताः । पृथुना उपदिष्टा, पृथूपदिष्टा ताम् ।

3. अनन्तरत्नप्रभवस्य यस्य
हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥

अन्वयः — अनन्तरत्नप्रभवस्य यस्य हिमं सौभाग्यविलोपि न जातं, (तथा) हि एकः दोषः गुणसन्निपाते इन्दोः किरणेषु अङ्कः इव निमज्जति ।

अर्थः — अनन्तरत्नप्रभवस्य = अपरिमितश्रेष्ठवस्तूनां जन्मस्थानभूतस्य, यस्य = यस्य हिमाद्रेः, हिमं = तुषारः, सौभाग्यविलोपि = सौन्दर्यविघातकं, न जातं = नाभूत्, (तथा) हि = तद्युक्तमेव, एकः दोषः = एकः दोषः, गुणसन्निपाते = गुणसङ्घाते, इन्दोः = चन्द्रस्य, किरणेषु =

मयूखेषु, अङ्क एव = कलङ्कवत्, निमज्जति = अन्तर्लीयते ।

तात्पर्यम् — अपरिमितानां श्रेष्ठवस्तूनां जन्मस्थानं स हिमालयः, तस्य हिमं सौन्दर्यविघातकं नाभूत्, तद्युक्तमेव, एको दोषः गुणसमुदाये यथा चन्द्रस्य मयूखेषु कलङ्कः (शोभाविशेषोऽपि) अन्तर्लीयते तथा अन्तर्लीयते । हिमं हिमाद्रेः शोभाविघातकं नाभूदित्यर्थः ।

विग्रहः - नास्ति अन्तः येषां तानि अनन्तानि, अनन्तानि च तानि रत्नानि च, अनन्तरत्नानां प्रभवः, तस्य । सुभगस्य भावः सौभाग्यम्, सौभाग्यं विलुम्पतीति सौभाग्यविलोपि । गुणानां सन्निपातः तस्मिन् ।

4. **यश्चाप्सरोविभ्रममण्डनानां**
**सम्पादयित्रीं शिखरैर्बिभर्ति ।**
**बलाहकच्छेद विभक्तरागा-**
**मकालसन्ध्यामिव धातुमत्ताम् ॥**

अन्वयः — यः अप्सरोविभ्रममण्डनानां सम्पादयित्रीं बलाहकच्छेदविभक्तरागां धातुमत्तां अकालसन्ध्यामिव शिखरैः बिभर्ति ।

अर्थः — यः = यो हिमाद्रिः, अप्सरोविभ्रम-मण्डनानां – अप्सरः = अप्सरसः, विभ्रमः = त्वरयाऽकाले

भूषास्थान विपर्ययेण, धृताना, मण्डनाना = भूषणाना, सम्पादयित्री = योजयित्री, बलाहकच्छेदविभक्तरागा — बलाहकाना = मेघाना, छेदेषु = खण्डेषु, विभक्त = सक्रान्त, रागा = रक्तवर्णा, धातुमत्ता (गैरिकादि) धातुयोगिता, अकालसन्ध्यामिव = अ समयप्राप्त सन्ध्या-कालमिव, शिखरै = शृङ्गै, बिभर्ति = धत्ते।

तात्पर्यम् — य हिमाद्रि, अप्सरसा त्वरया अकाले भूषास्थानविपर्ययेण धृताना मण्डनाना सम्पादयित्री, (धातु-रागदर्शनेन सन्ध्याभ्रमेण प्रसाधनाय त्वरमाणा अप्सरस इत्यर्थ ) मेघखण्डेषु सक्रान्तरागयुक्त गैरिकादि धातु-समुदाय अकालसन्ध्यामिव शिखरैर्धत्ते।

हिमाद्रौ गैरिकादि धातवो वर्त्तन्ते, ते च मेघखण्डेषु सक्रामन्ति, तद्दृष्ट्वा तत्रत्या अप्सरस सन्ध्याकाल-भ्रान्त्या स्वप्रसाधनक्रियाया सम्भ्रमयुक्ता स्थानविपर्यासेन भूषणानि योजयन्ति इति भाव ।

विग्रहा — अप्सरसा विभ्रम अप्सरोविभ्रम, तेन मण्डनानि, वारीणा वाहका बलाहका, तेषा छेदा, तेषु विभक्त राग यस्या सा, ताम्। अकाले सन्ध्या, ताम्। धातवोऽस्य सन्तीति धातुमान् तस्य भाव धातुमत्ता, ताम्।

5 पदं तुषारस्रुतिधौतरक्तं
यस्मिन्नदृष्ट्वाऽपि हतद्विपानाम् ।
विदन्ति मार्गं नखरन्ध्रमुक्तै –
र्मुक्ताफलैः केसरिणां किराताः ॥

अन्वय – यस्मिन् किराताः तुषारस्रुतिधौतरक्तं हतद्विपानां केसरि अदृष्ट्वाऽपि नखरन्ध्रमुक्तैः मुक्ताफलैः मार्गं विदन्ति ।

अर्थ – अस्मिन् = हिमाद्रौ, किराताः = व्य तुषारस्रुतिधौतरक्तं = हिमनिष्यन्दक्षालितशोणितं, द्विपानां = निहतगजानां, केसरिणां = सिंहानां, प पादप्रक्षेपस्थानं, अदृष्ट्वाऽपि = अनवलोक्यापि, नखर मुक्तैः = नखविवरविसृष्टैः, मुक्ताफलैः = मौक्ति मार्गं = पन्थानं, विदन्ति = जानन्ति ।

तात्पर्यम् — यस्मिन् हिमाद्रौ किराताः तु प्रस्रवेण क्षाळितरक्तं गजघातिनां सिंहानां पादप्रक्षेपस्थ मनवलोक्यापि सिंहानां नखरन्ध्रमुक्तैर्मौक्तिकै जानन्ति ।

गजरक्तमिश्रं तुषारक्षाळितं च सिंहानां पादप्र स्थानमुत्सृज्य व्याधाः गजसंहारकाले तत्कुम्भस्थलात् नखरन्ध्रलग्नानि गमनकाले गलितानि च यानि मु फलानि तेषां साहाय्येन सिंहगमनमार्गं जानन्ति । मु फलोद्भवस्थानानि —

करीन्द्रजीमूतवराहशङ्ख-
मत्स्याहि शुक्त्युद्भववेणुजानि ।
मुक्ताफलानि प्रथितानि लोके
तेषां हि शुक्त्युद्भवमेव भूरि ॥

विग्रहः — तुषारस्य स्रुतिः, तया धौतं तुषारस्रुति-धौतं रक्तं यस्मिन् तत्, न दृष्ट्वा अदृष्ट्वा, द्वि पिबन्तीति द्विपाः, हताः द्विपाः यैस्ते, तेषाम् । नखानां रन्ध्राणि, निर्मुक्तानि, तैः नखरन्ध्रमुक्तैः । केसराः एषां सन्तीति केसरिणः, तेषाम् ।

6. **आमेखलं सञ्चरतां घनानां**
**छायामधस्सानुगतां निषेव्य ।**
**उद्वेजिता वृष्टिभिराश्रयन्ते**
**शृङ्गाणि यस्यातपवन्ति सिद्धाः ॥**

अन्वय – सिद्धाः आमेखलं सञ्चरतां घनानां अधस्सानुगतां छायां निषेव्य वृष्टिभिः उद्वेजिताः यस्य आतपवन्ति शृङ्गाणि आश्रयन्ते ।

अर्थः — सिद्धाः = देवयोनिविशेषाः, आमेखलं = नितम्बपर्यन्तं, सञ्चरतां = सञ्चारवतां, घनानां = मेघानां, अधस्सानुगतां = अधस्तटभागं प्राप्तां, छायां = अनातपं, निषेव्य = सेवित्वा, वृष्टिभिः = वर्षैः, उद्वेजिताः (सन्तः) क्लेशिताः भूत्वा, यस्य = हिमाद्रेः, आतपवन्ति =

आतपमहितानि, शृङ्गाणि = शिखराणि, आश्रयन्ते भजन्ते ।

तात्पर्यम् — देवयोनिविशेषा मध्यभागाव मञ्चरता मेघाना मधस्सानुगता छाया सेवित्वा, वृष्टिभिर्नितरा वर्तोशिला यस्य हिमाद्रे रातपवन्ति शि राणि समाश्रयन्ते मघपण्डलादप्यत्युन्नतान्यस्य हिम शिखराणीति भाव ।

विग्रहा. — आमेखलास्य आमेखलम् अध सानुं अधस्सानूनि गता, ताम्, आतप एपामस्ति आतपवन्ति तानि ।

7. न्यस्ताक्षरा धातुरसेन यत्र
भूर्जत्वच. कुञ्जरबिन्दुशोणा ।
व्रजन्ति विद्याधरसुन्दरीणा -
मनङ्गलेखक्रिययोपयोगम् ॥

अन्वय — यत्र धातुरसेन न्यस्ताक्षरा कुञ्जर बिन्दु शोणा भूर्जत्व विद्याधरसुन्दरीणा अनङ्गलेखक्रियया उपयोग व्रजन्ति ।

अर्थ — यत्र = हिमाद्रौ, धातुरसेन = सिन्दूरादि द्रवेण, न्यस्ताक्षरा = लिखितवर्णा (अत एव) कुञ्जर बिन्दुशोणा = गजाना पद्मकाख्य बिन्दुजालमिव रक्तवर्ण भूर्जत्वच = भुजपत्रतरुवल्कला, विद्याधरसुन्दरीणा

विद्याधरकामिनीनाम्, अनङ्गलेखक्रियया = काम-व्यंजकलेखकरणेन, उपयोग=उपकार, व्रजन्ति=प्राप्नुवन्ति ॥

तात्पर्यम् — यत्र हिमाद्रौ सिन्दूर द्रवेण लिखित-वर्णा अत एव गजानां पद्मकाख्य बिन्दुजाल मिव रक्त वर्णा भुजपत्रतरुवल्कला विद्याधरकामिनीनां मान्मथ-लेखक्रिययोपकारं भजन्ते ।

विग्रहः — न्यस्तानि अक्षराणि यासु ताः न्यस्ताक्षराः, धातूनां रसः, तेन, भूर्जानां त्वचः, कुञ्जरस्य बिन्दवः, कुञ्जरबिन्दव इव शोणाः, विद्याधराणां सुन्दर्यः, तासाम्, नास्त्यङ्गं यस्य अनङ्गः, अनङ्गस्य लेखाः, तेषां क्रिया, तया ।

8. **यः पूरयन् कीचकरन्ध्रभागान्**
**दरीमुखोत्थेन समीरणेन,**
**उद्गास्यतामिच्छति किन्नराणां**
**तानप्रदायित्वमिवोपगन्तुम् ॥**

अन्वय – यः दरीमुखोत्थेन समीरणेन कीचकरन्ध्रभागान् पूरयन् उद्गास्यतां किन्नराणां तानप्रदायित्वं उपगन्तुं इच्छतीव ।

अर्थ — यः = हिमाद्रि, दरीमुखोत्थेन = गुहा-मुखादुत्पन्नेन, समीरणेन = वायुना, कीचकरन्ध्रभागान् = वेणूनां छिद्रप्रदेशान्, पूरयन् = धमयन्, उद्गास्यतां =

दारुविशेषाणां (वृक्षाणां), स्रुतक्षीरतया = क्षरितक्षीरत्वेन कारणेन, प्रसूत = उत्पन्न, गन्ध = परिमलगन्ध, सानूनि = सानुप्रदेशान्, सुरभीकरोति = अत्यन्त सुरभिगन्धयुक्तान् करोति।

तात्पर्यम् — यत्र हिमाद्रौ गजैः गण्डस्थ कण्डूति परिहारार्थं विघट्टितानां देवदारुवृक्षविशेषाणां क्षरित क्षीरत्वेन हेतुना उत्पन्नो गन्धः तस्यैव नगस्य सानुप्रदेशान् अत्यन्तसुरभिलान् करोति ।

विग्रहः — कपोलयोः कण्डूः, ता, सरन्ता इति द्रुमा, तेषाम्, स्रुतानि क्षीराणि येभ्यस्ते स्रुतक्षीरा, तेषां भाव, तया, असुरभीनि सुरभीनि सम्पद्यमानानि करोति सुरभीकरोति ।

10 **वनेचराणां वनितासखानां**
**दरीगृहोत्सङ्गनिषक्तभासः ।**
**भवन्ति यत्रौषधयो रजन्या –**
**मतैलपूरा. सुरतप्रदीपाः ।**

अन्वय. — यत्र रजन्यां दरीगृहोत्सङ्गनिषक्तभासः ओषधयः वनितासखानां वनेचराणां अतैलपूरा सुरतप्रदीपा. भवन्ति ।

अर्थं — यत्र = हिमाद्रौ, रजन्यां = रात्रौ, दरीगृहोत्सङ्गनिषक्तभासः = कुञ्जगृहमध्यभागेषु सक्तान्त

कान्तयः, ओषधयः = तृणज्योतींषि, वनितासखानां = ललनासहायानां (रममाणानामित्यर्थः), वनेचराणां = किरातानां, अतैलपूराः = अनपेक्षिततैलसेकाः, सुरत-प्रदीपाः = सुरतकालिकप्रदीपाः, भवन्ति = जायन्ते ।

तात्पर्यम् – यत्र हिमाद्रौ रात्रौ कुञ्जगृहमध्य-भागेषु सङ्क्रान्त कान्ति पुञ्जवन्ति तृणज्योतींषि रम-माणानां अनपेक्षित तैलसेकाः सुरतकालिकप्रदीपाः भवन्ति ।

विग्रहः — वने चरन्तीति वनेचराः, तेषाम् । दर्यः एव गृहाः, तेषामुत्सङ्गाः, तेषु निषक्ता भासः यासां ताः. तैलस्य पूरः, न विद्यते तैलपूरः येषु ते, सुरते प्रदीपाः ।

11. **उद्वेजयत्यंगुलिपार्ष्णिभागान्**
**मार्गे शिलीभूतहिमेऽपि यत्र ।**
**न दुर्वह श्रोणिपयोधरार्त्ता –**
**श्छिन्दन्ति मन्दां गतिमश्वमुख्यः ॥**

अन्वयः – यत्र शिलीभूतहिमे (अत एव) अङ्गुलिपार्ष्णिभागान् उद्वेजयत्यपि मार्गे दुर्वहश्रोणिपयोधरार्त्ताः अश्वमुख्यः मन्दां गतिं न छिन्दन्ति ।

अर्थ — यत्र = हिमाद्रौ, शिलीभूतहिमे = घनीभूततुषारे, (अत एव), अगुलिपार्ष्णिभागान् = अगुलिपार्श्वभागान्, उद्वेजयत्यपि=(अतिशैत्याद्धेतो )क्लेशयत्यपि मार्गे = मार्गे, दुर्वह श्रोणिपयोधरार्त्ता = (पीनत्वाद्धेतो )दुर्भर नितम्बाभ्या स्तनाभ्या च पीडिता , अश्वमुख्य = किन्नर्य , मन्दा = मन्थरा, गति = गमन, न छिन्दन्ति = त्यजन्ति ।

तात्पर्यम् — यत्र हिमाद्रौ घनीभूतहिमे, अत एव अगुलिपार्श्वभागान् अतिशैत्याद्धेतो क्लेशयत्यपि मार्ग (अतिपीनत्वाद्धेतो ) दुर्भराभ्या नितम्बाभ्या स्तनाभ्या च पीडिता किन्नरस्त्रिय मन्दगमन न त्यजन्ति । हिमपीडिताना द्रुतगमन तूचितम् , किन्तु दुर्भरनितम्बस्तनवत्यस्ता किन्नर्य , अतोहेतो हैमे मार्गे क्लेशयत्यपि सहज मन्दगमन न त्यजन्तीति भाव ।

विग्रहा — अगुलीना पार्ष्णय , अगुलिपार्ष्णीना भागा., तान् , अशिला शिला सम्पद्यन भूत शिलीभूत शिलीभूत हिम यस्मिन् स , तस्मिन् शिलीभूतहिमे, श्रोण्यौ च पयोधरौ च श्रोणिपयोधरम् दु खेन वोढु योग्य दुर्वह तत् श्रोणिपयोधर च, दुर्वहश्रोणिपयोधरेण आर्त्ता , अश्वाना मुखानीव मुखानि यासा ता ।

विग्रहः — दिवा कराणीति दिवाकरः, तस्मात्, (उलूकपक्षे) दिवाभीत दिवाभीत, तम्, ममेति भाव ममत्वम्, उच्च शिरांसि येषां ते उच्चैः शिरस, तेषाम् ।

॥ लाङ्गूलविक्षेपविसर्पिशोभैः –
इतस्ततश्चन्द्रमरीचिगौरैः ।
यस्यार्थयुक्तं गिरिराजशब्दं
कुर्वन्ति वालव्यजनैश्चमर्यः ॥

अन्वय – चमर्यः इतस्ततः लाङ्गूलविक्षेप विसर्पिशोभैः चन्द्रमरीचिगौरैः वालव्यजनैः यस्य गिरिराजशब्दं अर्थयुक्तं कुर्वन्ति ।

अर्थ — चमर्यः = मृगीविशेषाः, इतस्ततः = इतस्ततः, लाङ्गूलविक्षेपविसर्पिशोभैः = वालधीनां धूननैर्विसृमरकान्तिवद्भिः, चन्द्रमरीचिगौरैः = चन्द्रकिरणवत् स्वेतैः, वालव्यजनैः = चामरैः, यस्य = हिमाद्रेः, गिरिराजशब्दं = गिरिराज इति संज्ञा, अर्थयुक्तं सार्थकं, कुर्वन्ति = विदधति ।

तात्पर्यम् चमरीमृगा इतस्ततः सञ्चरन्तः लाङ्गूलचालनेन प्रसरत्कान्तिवद्भिः, चन्द्रिकाधवलैः वालव्यजनैः (चामरैः) यस्य हिमाद्रेः पर्वतराजशब्दं सार्थकं कुर्वन्ति । राजानो हि छत्रचामरादिचिह्निता भवन्ति ।

विग्रहाः — लागूलाना विक्षेपा , तै विमर्श शोभा येषा तानि, तै लागूलविक्षेपविमर्शपिशं चन्द्रस्य मरीचय चन्द्रमरीचय इव गौराणि तै . युक्तः अर्थयुक्त , गिरीणा राजा गिरिराज गिरि इति शब्द , तम् , अर्थेन युक्त तम् वालान्येव व्यजनानि

14. यत्रांशुकाक्षेपविलज्जितानां
यदृच्छया किंपुरुषाङ्गनानाम् ।
दरीगृहद्वार विलम्बिबिम्बा -
स्तिरस्करिण्यो जलदा बभूवुः ॥

अन्वयः – यत्र अंशुकाक्षेपविलज्जितानां, किंपुरुषाङ्गनानां यदृ
दरीगृहद्वारविलम्बिबिम्बा, जलदा तिरस्करिण्य भवन्ति ।

अर्थ — यत्र = हिमाद्रौ, अंशुकाक्षेप विल तानां = वस्त्राकर्षणेन भृश लज्जितानां, किंपुरुषा नानां = किन्नरस्त्रीणां, यदृच्छया = दैवगत्या, दरी द्वारविलम्बिबिम्बा = गुहारूपा ये गृहास्तेषा द्व लम्बमानदेहा , जलदा = मेघा , तिरस्करिण्य यवनिका , भवन्ति = जायन्ते ।

तात्पर्यम् — यत्र हिमाद्रौ वस्त्राकर्षणेन लज्जावर्तीनां किन्नरस्त्रीणां दैवगत्याऽऽगत्य गुहामु लम्बमाना मेघा यवनिका भवन्ति ।

विग्रहा — अंशुकानामाक्षेप, तेन विलज्जिता, तासाम्, किंपुरुषाणा अगना, तासाम् दर्य एव गृहा: तेषा द्वाराणि, तेषु विलम्बीनि बिम्बानि येषा ते दरीगृहद्वार विलम्बिबिम्बा, जल ददति इति जलदा ।

15. भागीरथीनिर्झरशीकराणां
वोढा मुहु कम्पितदेवदारुः ।
यद्वायुरन्विष्टमृगैः किरातै
रासेव्यते भिन्नशिखण्डिबर्हः ॥

अन्वयः — भागीरथी निर्झर शीकराणा, वोढा मुहु कम्पितदेवदारु भिन्नशिखण्डिबर्ह, यद्वायुः, अन्विष्टमृगै किरातै आसेव्यते ।

अर्थ — भागीरथीनिर्झरशीकराणा = गंगाप्रवाहाम्भ.कणाना, वोढा = वाहक, मुहु = पुन पुन, कम्पितदेवदारु = चालितदेवदारुतरु, भिन्नशिखण्डि बर्ह = विश्लेषितमयूरपिच्छ, यद्वायु = यस्य हिमाद्रे वायु., अन्विष्टमृगै = मार्गितमृगै, किरातै = व्याधै, आसेव्यते = अनुभूयते ।

तात्पर्यम् — गंगाप्रवाहाम्भ कणवाहक, पुन पुन चालितदेवदारुवृक्ष, विश्लेषितमयूरपिच्छ यस्य हिमाद्रे-वायु (शैत्यसौरभ्य मान्द्यगुणसम्पन्न इत्यर्थ) मृगानन्विष्य श्रान्तैर्व्याधै रनुभूयते ।

कु-5

विग्रहः — भगीरथेनानीता भागीरथी, तस्याः निर्झरः, तस्य शीकराणि, तेषाम्, कम्पिता देवदारवः येन सः कम्पितदेवदारुः, अन्विष्टाः मृगाः यैस्ते अन्विष्टमृगाः, तैः, शिखण्डीनां बर्हाः, भिन्नाः शिखण्डिबर्हाः येन सः भिन्नशिखण्डिबर्हः।

16. **सप्तर्षिहस्तापचितावशेषा-**
**ण्यधो विवस्वान् परिवर्त्तमानः ।**
**पद्मानि यस्याग्रसरोरुहाणि**
**प्रबोधयत्यूर्ध्वमुखैर्मयूखैः ॥**

अन्वयः — सप्तर्षिहस्तापचितावशेषाणि यस्य अग्रसरोरुहाणि पद्मानि अधः परिवर्त्तमानः विवस्वान् ऊर्ध्वमुखैः मयूखैः प्रबोधयति ।

**अर्थ** — सप्तर्षिहस्तापचितावशेषाणि – सप्तर्षीणां (अत्रिभरद्वाजादीनां) हस्तैर्लूनेभ्योऽवशिष्टानि, यस्य= हिमाद्रेः, अग्रसरोरुहाणि = उपरितले यानि सरांसि तत्रोत्पन्नानि, पद्मानि = कमलानि, अधः = अधोभागे, परिवर्त्तमानः = परिभ्रमन्, विवस्वान् = सूर्यः, ऊर्ध्वमुखैः = ऊर्ध्वं प्रसृतैः, मयूखैः = किरणैः, प्रबोधयति = विकासयति।

तात्पर्यम् — सप्तर्षिहस्तलूनावशिष्टानि यस्य हिमाद्रेः उपरितले विद्यमानेषु सरस्सु जातानि कमलानि अधो भ्रमन् सूर्यः ऊर्ध्वप्रसृतैः स्वकीयैः किरणैर्विकासयति।

अनेन हिमाद्रौ उपरिभागे सरांसि, तत्र च कमलानि, तेषां सप्तर्षिभिर्ग्रहणात् सार्थक्यम्, सूर्येण चाधोभ्रमणकथनेन हिमाद्रेः परमौन्नत्यम्, अतिमार्तण्डमण्डलत्वं च सूचितम् ॥

विग्रहः — सप्त च ते ऋषयश्च सप्तर्षयः, तेषां हस्ताः तैः अवचितानि, तेभ्योऽवशेषाणि, तानि, अग्रे सरांसि, तेषु रोहन्तीति अग्रसरोरुहाणि, तानि, ऊर्ध्वं मुखं येषां तानि ऊर्ध्वमुखानि, तैः ।

17 **यज्ञाङ्गयोनित्वमवेक्ष्य यस्य**
**सारं धरित्रीधरणक्षमं च ।**
**प्रजापतिः कल्पितयज्ञभागं**
**शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥**

अन्वयः — यस्य यज्ञाङ्गयोनित्वं धरित्रीधरणक्षमं सारं च अवेक्ष्य प्रजापतिः स्वयं कल्पितयज्ञभागं शैलाधिपत्यं अन्वतिष्ठत् ।

अर्थः — यस्य=हिमाद्रेः, यज्ञाङ्गयोनित्वं = यज्ञसाधनभूतसोमलतादीनां प्रभवस्थानतां, धरित्रीधरणक्षमं = भूभारधरणयोग्यं, सारं च = बलं च, अवेक्ष्य = ज्ञात्वा, प्रजापतिः = ब्रह्मा, स्वयं = स्वयमेव, कल्पितयज्ञभागं = स्वयंस्थापितयज्ञभागं, शैलाधिपत्यं = पर्वतराजत्वं, अन्वतिष्ठत् = ददौ ।

तात्पर्यम् — ब्रह्मा यस्य हिमाद्रे यज्ञसाधन सोमलतादि प्रभवस्थानता भूभारवहनक्षम बल च ज्ञात्वा यज्ञभागकल्पनपूर्वकं पर्वतराजत्व तस्मै ददौ। 'सोमस्य राज सिन्धोश्शिशुमारो हिमवतो हस्ती' इति श्रुति ॥

विग्रहा — यज्ञाना अङ्गानि तेषा योनि, तस्य भाव यज्ञाङ्गयोनित्वम्, तत्; धरित्र्या धरण, तस्मिन् क्षमं धरित्रीधरणक्षम तत्, प्रजाना पति. प्रजापति, यज्ञेषु भाग, कल्पित यज्ञभाग यस्मिन् तत् कल्पित-यज्ञभाग तत्, शिलानां समूहा', तेषामधिपति, तस्य भाव शैलाधिपत्यम्

18. **स मानसीं मेरुसखः पितॄणा**
**कन्यां कुलस्य** स्थितये स्थितिज्ञः।
**मेनां मुनीनामपि माननीया-**
**मात्मानुरूपां** विधिनोपयेमे ॥

अन्वय — मेरुसख स्थितिज्ञ स पितॄणा। मानसीं मुनीना अपि माननीया आत्मानुरूपा मेना कन्या कुलस्य स्थितये विधिना उपयेमे।

अर्थ — मेरुसख = मेरो (पर्वतस्य) सुहृत् स्थितिज्ञ = मर्यादाभिज्ञ, स = हिमवान्, पितॄणा=पितृ देवताना, मानसी = सकल्पमात्रजाता, मुनीनामपि = महर्षीणामपि, माननीया = पूज्या, आत्मानुरूपा = कुल-

शीलसौन्दर्यादिभि आत्मन सदृशी, मेना = मेनकानाम्नी, कन्या = उद्वाहयोग्या कन्यां, कुलस्य = स्ववंशस्य, स्थितये प्रतिष्ठायै, विधिना = शास्त्रप्रकारेण, उपयेमे=परिणिनाय ।

तात्पर्यम् — मेरो सखा मर्यादाभिज्ञ स हिमवान् पितृदेवताना सकल्पमात्रजाता मुनीनामपि पूज्या, कुल-शीलसौन्दर्यादिभिरात्मन सदृशी मेनका नाम कन्या स्वकुलस्य प्रतिष्ठायै यथाविधि परिणिनाय ।

विग्रहा — मनसि जाता मानसी, ताम्, मेरो सखा मेरुसख., स्थिति जानातीति स्थितिज्ञ, माननाथा योग्या माननीया, ताम्, आत्मन अनुरूपा, ताम् ।

19. कालक्रमेणाथ तयो· प्रवृत्ते
स्वरूपयोग्ये सुरतप्रसङ्गे ।
मनोहरं यौवनमुद्वहन्त्या
गर्भोऽभवद्भूधरराजपत्न्याः ॥

अन्वय. – अथ कालक्रमेण तयो स्वरूपयोग्ये सुरतप्रसङ्गे वृत्ते (सति) मनोहर यौवन उद्वहन्त्या. भूधरराजपत्न्या गर्भ अभवत् ।

अर्थ — अथ = परिणयानन्तर, कालक्रमेण = गच्छता कालेन, तयो = मेनकाहिमवतो, स्वरूपयोग्ये = स्वसौन्दर्यानुगुणे, सुरतप्रसङ्गे = सुरतकर्मणि, प्रवृत्ते

कु-6

(सति) = प्रवृत्ते सति, मनोहरं = मनोज्ञं, यौवनं = तारुण्यं, उद्वहन्त्या = वहन्त्या, भूधरराजपत्न्या = पर्वतराजपत्न्या मेनकाया, गर्भं = गर्भं, अभवत् = अजायत ।

तात्पर्यम् — परिणयानन्तरं गच्छता कालेन तयोर्मेनाहिमवतोः स्वरूपसौन्दर्यानुगुणे सुरतकर्मणि प्रवृत्ते सति मनोज्ञं तारुण्यं वहन्ती सा पर्वतराजधर्मपत्नी अन्तर्वत्नी बभूव ।

विग्रहः — कालस्य क्रमः, तेन, स्वस्य रूपं, तस्य योग्यं, तस्मिन्, सुरतस्य प्रसङ्गः, तस्मिन्, मनः हरतीति मनोहरं तत्, यूनो भावः यौवनम्, तत्, भुवं धरन्तीति भूधराः, तेषां राजा भूधरराजः, तस्य पत्नी, तस्याः ।

20. असूत सा नागवधूपभोग्यं
मैनाकमम्भोनिधिबद्धसख्यम् ।
क्रुद्धेऽपि पक्षच्छिदि वृत्रशत्रा -
ववेदनाज्ञं कुलिशक्षतानाम् ॥

अन्वयः — सा नागवधूपभोग्यम् अम्भोनिधिबद्धसख्यं, पक्षच्छिदि, वृत्रशत्रौ क्रुद्धे (सति) अपि कुलिशक्षतानाम् अवेदनाज्ञं मैनाकम् असूत ।

अर्थ — सा = मेनका, नागवधूपभोग्य = नागकन्योपभोगयोग्यं, (नागकन्याभिः सेवितमिति भाव ), अम्भोनिधिबद्धसख्य = समुद्रेण कृतमैत्रीक, पक्षच्छिदि = पक्षच्छेदके, वृत्रशत्रौ = वृत्रासुरसंहारके देवेन्द्रे, क्रुद्धे सत्यपि = कुपिते सत्यपि, कुलिशक्षताना = वज्रायुधप्रहरणाना, अवेदनाज्ञ = वेदनाया अवेत्तार, मैनाक = मैनाकनामान पुत्र (मेनकाया अपत्य पुमान् मैनाक ) असूत = प्रसूतवती ।

तात्पर्यम् — सा मेनका नागवधूपरिणेतार, अम्भोनिधिना सह सख्यसमन्वित (समुद्रे निमज्ज्य वर्त्तमान) पर्वताना पक्षच्छेदके देवेन्द्रे कुपितेऽपि वज्रघाताना वेदनानभिज्ञ मैनाकनामान सुत प्रसूतवती ।

विग्रह — नागाना वध्व, उपभोगस्यार्ह उपभोग्य, नागवधूभिरुपभोग्य, तम्, मेनकाया अपत्य पुमान्, मैनाक, तम्, अम्भसा निधि, तेन बद्ध सख्य यस्य स, अम्भोनिधिबद्धसख्य, तम्, पक्षौ छिनत्तीति पक्षच्छित्, तस्मिन्, वृत्रस्य शत्रु, तस्मिन्, वेदना जानातीति, वेदनाज्ञ न वेदनाज्ञ., तम्; कुलिशस्य क्षता, तेषाम् ।

21. अथावमानेन पितु: प्रयुक्ता
दक्षस्य कन्या भवपूर्वपत्नी ।
सती सती योगविसृष्टदेहा
ता जन्मने शैलवधू प्रपेदे ।।

अन्वय – अथ दक्षस्य कन्या भवपूर्वपत्नी सती सती पितु अवमानेन प्रयुक्ता योगविसृष्टदेहा जन्मने ता शैलवधू प्रपेदे ।

अर्थ — अथ = मेनाकजननानन्तर, दक्षस्य = दक्षप्रजापते, कन्या = पुत्री, भवपूर्वपत्नी = हरस्य पूर्वा भार्या, सती = पतिव्रता, सती = सती नाम्नी देवी, पितु = जनकस्य दक्षप्रजापते, अवमानेन = अवज्ञया, (स्वभर्तुरवमाननेन) प्रयुक्ता = प्रेरिता सती, योगविसृष्टदेहा = योगमार्गेण त्यक्तशरीरा सती, जन्मने = पुनर्भवाय, ता शैलवधू = ता पर्वतराजपत्नी मेनका, प्रपेदे = प्राप्तवती ।

तात्पर्यम् — मैनाकजननानन्तर दक्षस्य पुत्री शकरस्य पूर्वपत्नी सतीनाम्नी पतिव्रता पिता दक्षेन कृता स्वभर्तुरवमानना असहमाना योगेन स्वदेह त्यक्त्वा पुनर्जन्मने ता शैलवधू मेनका प्राप्तवती:, (अत्र पुरा किल सतीदेवी (हरपत्नी) दक्षाध्वरे दक्षकृता स्वभर्त्रवज्ञामसह-

माता पितरं वीक्ष्य मत्कर्तव्यकार्यं त्वज्जामातैव करिष्यती-त्युक्त्वा देवकार्याणि साधयितुं च स्वशरीरं योगाग्निना ददाहेति कथा अनुसन्धेया) ।

विग्रहा — पूर्वा च सा पत्नी च पूर्वपत्नी, भवस्य पूर्वपत्नी, योगेन विसृष्टः देहः यया सा योगविसृष्टदेहा, शिलानां समूहः शैलः, तस्य वधूः, ताम् ।

22. **सा भूधराणामधिपेन तस्या**
**समाधिमत्यामुदपादि भव्या ।**
**सम्यक्प्रयोगादपरिक्षतायां**
**नीताविवोत्साहगुणेन सम्पत् ॥**

अन्वय – भव्या सा भूधराणां अधिपेन समाधिमत्यां तस्यां सम्यक् प्रयोगात् अपरिक्षतायां नीतौ उत्साहगुणेन सम्पदिव उदपादि ।

अर्थः — भव्या = कल्याणी, सा = सतीदेवी भूधराणामधिपेन = हिमवता, समाधिमत्यां = नियमवत्यां, तस्यां = मेनकायां, सम्यक्प्रयोगात् = साध्वाचरणात् हेतोः, अपरिक्षतायां = अभ्रष्टायां, नीतौ = नित्यां, उत्साहगुणेन = उत्साहशक्तिरूपेण कर्त्रा, सम्पदिव = समृद्धिरिव, उदपादि = उत्पादिता ।

तात्पर्यम् — नीत्या उत्साहगुणेन उत्पादिता सम्पदिव तेन हिमवता नियमवत्या साध्वाचरणाद्भ्रंशो अभ्रष्टाया तस्या मेनकाया सा सतीदेव उत्पादिता अभूत् ।

विग्रहा —भुव धरन्तीति भूधरा, तेषाम्, समाधि- रस्या अस्तीति समाधिमती, तस्या, न परिक्षता अपरिक्षता, तस्याम्, उत्साहस्य गुण उत्साहगुण, तेन ।

23 प्रसन्नदिक्पांसुविविक्तवातं
शङ्खस्वनानन्तरपुष्पवृष्टि ।
शरीरिणां स्थावरजङ्गमानां
सुखाय तज्जन्मदिनं बभूव ॥

अन्वय — प्रसन्नदिक् पांसुविविक्तवात शङ्खस्वनानन्तरपुष्पवृष्टि, तज्जन्म- दिन स्थावरजङ्गमाना शरीरिणा सुखाय बभूव ।

अर्थ — प्रसन्नदिक् = विनिर्मलदिक्प्रान्तवत्, पां- विविक्तवात = धूलीरहितवातवत्, शङ्खस्वनानन्तरपुष्प- वृष्टि - शङ्खनिनादोत्तर पुष्पवर्षवच्च, तज्जन्मदिन - तस्या (पार्वत्या) जन्मदिन, स्थावरजङ्गमाना = चरा- चरात्मकाना, शरीरिणा = प्राणिना, सुखाय = आनन्दाय बभूव अभूत् ।

तात्पर्यम् – पार्वत्या जन्मदिनं चराचरात्मकानां देहभृतामानन्ददायाभूत्, तस्मिन् दिने दिशः प्रसन्ना (निर्मला) अभवन्, वातश्च पांसुरहित आसीत्, शङ्खध्वनेरनन्तरं पुष्पवृष्टिश्चाभूत्, एतादृशैः शुभलक्षणोपेतं तज्जन्मदिनं सर्वेषामेवानन्ददायाकल्पतेति भावः ।

विग्रहः — प्रसन्ना दिशः यस्मिन् तत् प्रसन्नदिक्, पांसुभिः विविक्तः वातः यस्मिन् तत् पांसुविविक्तवातं, शङ्खस्य स्वनः, शङ्खस्वनानन्तरं पुष्पवृष्टिः यस्मिन् तत् शङ्खस्वनानन्तरपुष्पवृष्टि, शरीरमेषामस्तीति शरीरिणः, तेषां, स्थावराश्च जङ्गमाश्च, तेषाम्, तस्याः जन्मदिनं तज्जन्मदिनम् ।

24 तया दुहित्रा सुतरां सवित्री
स्फुरत्प्रभामण्डलया चकाशे ।
विदूरभूमिर्नवमेघशब्दा –
दुद्भिन्नया रत्नशलाकयेव ॥

अन्वयः – स्फुरत्प्रभामण्डलया तया दुहित्रा सवित्री विदूरभूमिः नवमेघशब्दात् उद्भिन्नया रत्नशलाकया इव सुतरां चकाशे ।

अर्थः — स्फुरत्प्रभामण्डलया = प्रकाशमान कान्ति-मण्डलवत्या, तया दुहित्रा = तया पुत्र्या पार्वत्या, सवित्री = जनयित्री (मेनका), विदूरभूमिः = अद्रेः प्रान्तभूमिः,

नवमेघशब्दात् = नूतनमेघगर्जनात्, उद्भिन्नया = उद्भतया, रत्नशलाकयेव = रत्नाङ्कुरेणेव, सुतरा = अत्यन्त, चकाश = रराज ।

तात्पर्यम् — प्रकाशमानकान्तिपुञ्जयुक्ता सा पार्वती, तादृश्या दुहित्रा तज्जननी मेनका नूतनमेघगर्जनाद्-उद्भूतरत्नाकुरेण युक्ता पर्वतप्रान्तभूमिरिव रराज ।

विग्रहः — प्रभायाः मण्डलं, स्फुरत् प्रभामण्डलं यस्याः सा, तया, विदूरस्य भूमि, नवश्चासौ मेघश्च, नवमेघस्य शब्द, तस्मात्, रत्नस्य शलाका, तया ।

25 दिने दिने सा परिवर्धमाना
लब्धोदया चान्द्रमसीव रेखा ।
पुपोष लावण्यमयान् विशेषान्
ज्योत्स्नान्तराणीव कलान्तराणि ।।

अन्वय — लब्धोदया दिने दिने परिवर्धमाना सा चान्द्रमसी लेखेव लावण्यमयान् विशेषान् ज्योत्स्नान्तराणि कलान्तराणीव पुपोष ।

अर्थ — लब्धोदया = प्राप्तोदया (उत्पन्नेत्यर्थ) (ज्योत्स्नापक्षेऽपि जातोदयेत्यर्थ), दिने दिने = प्रतिदिन, परिवर्धमाना = विवर्धमाना, सा = बाला (पार्वती),

चान्द्रमसी = चन्द्रमसम्बन्धिनी, लेखेव = कलेव, लावण्यमयान् = कान्तिविशेषप्रचुरान्, विशेषान् = अवयवान्, ज्योत्स्नान्तराणि = ज्योत्स्नयान्तर्हितानि, कलान्तराणीव = अन्या कला इव, पुपोष = उपचितवती ।

तात्पर्यम् — उत्पन्ना सती प्रतिदिन विवर्धमाना सा (पार्वती) चन्द्रस्य कान्तिरेखेव अत्यन्ताधिककान्ति विशेषशोभितोऽवयवान् (लावण्ययुक्तानित्यर्थ), ज्योत्स्नायामन्तर्हितानि कलान्तराणीव उपचितवती। ज्योत्स्नायामन्तर्हिता कला क्रमेण यथा वृद्धि यान्ति तथैव पार्वत्या अवयवा लावण्ययुक्ता ववृधिरे इत्यर्थ ।

विशेष – मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा ।
प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ।।

विग्रहा — लब्ध, उदय यया सा लब्धोदया, चन्द्रमस इय चान्द्रमसी, ज्योत्स्नया अन्तर्हितानि ज्योत्स्नान्तराणि, अन्या कला कलान्तराणि ।

26. **तां पार्वतीत्याभिजनेन नाम्ना**
**बन्धुप्रियां बन्धुजनो जुहाव ।**
**उमेति मात्रा तपसो निषिद्धा**
**पश्चादुमाख्यां सुमुखी जगाम ।।**

अन्वय – बन्धुप्रियां तां बन्धुजनः आभिजनेन पार्वतीति नाम्ना आजुहाव पश्चात् मात्रा (उ मा इति) तपसः निषिद्धा सुमुखी उमाख्यां जगाम।

अर्थ — बन्धुप्रियां = पित्रादिजनप्रीतिविषयां, तां = बालां, बन्धुजनः = पित्रादिजनः, आभिजनेन = पूर्वसम्बन्धोपाधिकेन, पार्वतीति = पार्वतीत्याकारकेण, नाम्ना = नामधेयेन (पर्वतस्यापत्यं स्त्री पार्वती इति), जुहाव = आहूतवान्, पश्चात् = आभिजननामप्रवृत्त्यनन्तरं, मात्रा = जनन्या मेनकया, उ = हे कन्ये, मा = मा कुरु, इति = इत्येवं रूपेण, तपसः = तपश्चरणात्, निषिद्धा = निवारिता सती, सुमुखी = शोभनमुखसमन्विता सा बाला, उमाख्यां = उमेति नाम, जगाम = प्राप्तवती।

तात्पर्यम् — पित्रादिजनप्रीतिविषयां तां बालां पित्रादिजनः पूर्वसम्बन्धोपाधिकेन (साम्प्रदायिकेन) 'पार्वती' इति नाम्ना आहूतवान्, पश्चात् जनन्या उ मा इति तपसो निवारिता सती सा बाला 'उमा' इति नाम भेजे।

विग्रहः — पर्वतस्यापत्यं स्त्री पार्वती, अभिजनादागतम् आभिजनम्, तेन, बन्धूनां प्रिया, ताम्, बन्धूनां जनः बन्धुजनश्च, उमा इति आख्या उमाख्या, ताम्, शोभनं मुखं यस्याः सा, सुमुखी।

27 महीभृतः पुत्रवतोऽपि दृष्टि-
स्तस्मिन्नपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते
द्विरेफमाला सविशेषसङ्गा ॥

अन्वय — पुत्रवतोऽपि, महीभृतः दृष्टिः तस्मिन् अपत्ये तृप्तिं न जगाम (तथा) हि अनन्तपुष्पस्य मधोः द्विरेफमाला चूते सविशेषसङ्गा ।

अर्थ — पुत्रवतोऽपि = पुत्रीपुत्ररूपापत्यवतोऽपि, महीभृतः = पर्वतराजस्य तस्य हिमवतः, दृष्टिः = चक्षुः, तस्मिन् अपत्ये = तस्याम् अपत्यभूतायां पार्वत्याम्, तृप्तिम् = निर्वृतिम्, न जगाम = न लेभे, (तथा) हि = तद्युक्तमेव, अनन्तपुष्पस्य = नानाविधकुसुमस्य, मधोः = वसन्तस्य, द्विरेफमाला = भ्रमरपङ्क्तिः, चूते = चूतकुसुमे, सविशेषसङ्गा = अत्यन्तासक्तिमती ।

तात्पर्यम् — बह्वपत्यवतोऽपि पर्वतराजस्य हिमवतः तस्यां पार्वत्यां दृष्टिः न तृप्तिमियाय, तद्युक्तमेव, वसन्तकाले बहूनि पुष्पाणि भवन्ति, तथापि सा वसन्तकालीया भ्रमरपङ्क्तिः चूतकुसुमे अत्यन्तासक्तियुक्ता भवति । तद्वत् अनेकापत्यवतोऽपि तस्य हिमवतः तस्यां पार्वत्यां प्रीत्यतिशय आसीदिति भावः ।

विग्रह। — मही बिभर्तीति महीभृत्, तस्य. पुत्रा अस्य सन्तीति पुत्रवान्, तस्य नास्त्यन्तं येषां तानि अनन्तानि, अनन्तानि पुष्पाणि यस्य स , तस्य, द्विरेफाणां माला, विशेषणसहित सविशेष सञ्ज्ञ यस्या सा सविशेष-सञ्ज्ञा ।

28 **प्रभामहत्या शिखयेव दीप –**
**स्त्रिमार्गयेव त्रिदिवस्य मार्गः ।**
**सस्कारवत्येव गिरा मनीषी**
**तया स पूतश्च विभूषितश्च ॥**

अन्वय – प्रभामहत्या शिखया दीप इव त्रिमार्गया त्रिदिवस्य मार्ग. इव तया स पूत च विभूषित च ।

अर्थ — प्रभामहत्या = प्रकाशाधिकया, शिखया = ज्वालया, दीप इव = दीपो यथा, त्रिमार्गया = त्रिपथया (गङ्गयेत्यर्थ ), त्रिदिवस्य = स्वर्गलोकस्य, मार्ग इव = पन्था इव, सस्कारवत्या = व्याकरणजन्यशुद्धिमत्या, गिरा = वाचा, मनीषी इव = विद्वानिव, स = हिमवान्, तया = पार्वत्या, पूतश्च = शुद्धश्च, विभूषितश्च = अलङ्कृतश्च (अभूत् = अभवत्) ।

तात्पर्यम् – अत्यन्तप्रकाशवत्या ज्वालया दीप यथा शुद्ध अलङ्कृतश्च भवति, त्रिपथगया गगया यथा स्वर्गस्य

मार्गः शुद्धः अलङ्कृतश्च भवति, एवं व्याकरणशुद्धया गिरा यथा विद्वान् शुद्धः अलङ्कृतश्च भवति तथा स हिमवान् तया दुहित्रा पार्वत्या शुद्धः अलङ्कृतश्चाभूत् ।

विग्रहः — प्रभया महती, तया, त्रयो मार्गा यस्याः सा त्रिमार्गा, तया, संस्कारः अस्याः अस्तीति संस्कारवती, तया, मनसः ईषा, मनीषा अस्याः अस्तीति मनीषी, विशेषेण भूषितः विभूषितः ।

29. मन्दाकिनीसैकतवेदिकाभिः
सा कन्दुकैः कृत्रिमपुत्रकैश्च ।
रेमे मुहुर्मध्यगता सखीनां
क्रीडारसं निर्विशतीव बाल्ये ॥

अन्वयः — सा बाल्ये क्रीडारसं निर्विशतीव सखीनां मध्यगता मन्दाकिनी-सैकतवेदिकाभिः कन्दुकैः कृत्रिमपुत्रकैश्च, मुहुः रेमे ।

अर्थ — सा = पार्वती, बाल्ये = शैशवे वयसि, क्रीडारसं = स्वादोर्मीच, निर्विशतीव = भुञ्जानेव, सखीनां = चेटीनां, मध्यगता सती = मध्यं प्रविष्टा सती, मन्दाकिनी सैकतवेदिकाभिः = भागीरथ्याः सैकतनिर्मित-वेदिकाभिः, कन्दुकैः = क्रीडासाधनैः, कृत्रिमपुत्रकैश्च =

स्वनिर्मितपाञ्चालिकाभिश्च, मुहु = पुनः पुनः, रेमे = चिक्रीड ।

तात्पर्यम् — सा पार्वती बाल्ये वयसि क्रीडारसं समग्रं भुञ्जानेव सखीनां मध्यं प्रविष्टा सती मन्दाकिनी-पुलिनवेदिकासु कन्दुकैः स्वनिर्मितपाञ्चालिकाभिश्च पुनः-पुनश्चिक्रीड ।

विग्रहः — मन्दाकिन्याः सैकतानि, तेषां वेदिकाः, तासु, क्रियया निर्वृत्ताः कृत्रिमाः, कृत्रिमाश्च ते पुत्रकाश्च, तैः, मध्यं गता मध्यगता, क्रीडानां रसः, तम्, बालायाः भावः बाल्यं तस्मिन् ।

30 तां हंसमालाः शरदीव गङ्गां
महौषधीं नक्तमिवात्मभासः ।
स्थिरोपदेशामुपदेशकाले
प्रपेदिरे प्राक्तनजन्मविद्याः ॥

अन्वयः — स्थिरोपदेशां तां उपदेशकाले प्राक्तनजन्मविद्याः शरदि गङ्गां हंसमालाः इव नक्तं महौषधीं आत्मभासः इव प्रपेदिरे ।

अर्थः — स्थिरोपदेशाम् = अस्खलितोपदेशाम् (मेधा-विनीमित्यर्थः), ताम् = पार्वतीम्, उपदेशकाले = विद्योपदेश-वेलायां प्राक्तनजन्मविद्याः = पूर्वस्मिन् जन्मनि अभ्यस्ताः ।

विद्या, शरदि = शरत्काले, गङ्गा = भागीरथी, हंसमाला इव = हंसपङ्क्तय इव, नक्तं = रात्रौ, **महौषधी** = तृण-विशेष, आत्मभास इव = स्वकीयदीप्तय इव, **प्रपेदिरे** = प्रापुः ।

तात्पर्यम् — अत्यन्तिनोपदेशा मेधाविनी ता पार्वती विद्योपदेशवेलायां पूर्वस्मिन् जन्मनि अभ्यस्ता सकला विद्या शरत्काले हंसपङ्क्तयो भागीरथीमिव, नक्तं रात्रौ तृणविशेष स्वदीप्तय इव च (उपदेशमन्तरेणैवेति भाव) प्रापुः ।

विग्रहः — हंसानां माला, महती चासौ ओष-धीश्च, ताम्, आत्मन भास, स्थिर उपदेश यस्या सा स्थिरोपदेशा, ताम्, उपदेश य काल तस्मिन्, प्राक् भूत प्राक्तन, प्राक्तनं च तत् जन्म च प्राक्तनजन्म, प्राक्तन-जन्मनि विद्या प्राक्तनजन्मविद्या ।

31. **असम्भृतं मण्डनमङ्गयष्टे —**
**रनासवाख्यं करण मदस्य ।**
**कामस्य पुष्पव्यतिरिक्तमस्त्रं**
**बाल्यात्पर साऽथ वय. प्रपेदे ॥**

अन्वय — अथ सा अङ्गयष्टे असम्भृतं मण्डनं अनासवाख्यं मदस्य करणं कामस्य पुष्पव्यतिरिक्तं अस्त्रं बाल्यात् परं वय प्रपेदे ।

अर्थ — अथ = पश्चात्, सा = पार्वती, अङ्गयष्टे = यष्टिसदृशस्याङ्गस्य, असम्भृत = अयत्नसिद्ध, मण्डन = प्रसाधन मदस्य = मदाख्यस्य दुर्गणस्य, अनासवाख्य = 'आसव' नाम रहित, करण = साधन, कामस्य = मन्मथस्य, पुष्पव्यतिरिक्त = पुष्पाद्भिन्न, अस्त्र = अस्त्रभूत, बाल्यात्पर = शैशवानन्तरभावि, वय = यौवन, प्रपेदे = प्राप ।

तात्पर्यम् — अनन्तरं सा पार्वती शैशवानन्तरभावि, यौवन वय प्राप्तवती, यौवन च कीदृशमिति चेत् — यष्टिसदृशस्य गात्रस्य अयत्नसिद्ध भूषण, मदस्य 'आसव' इत्याख्याशून्य साधन मन्मथस्य पुष्पाद्भिन्नमस्त्रम्, तादृश यौवनं पार्वती प्राप ।

विग्रहः — न सम्भृत असम्भृत, तत्, अङ्ग यष्टिरिव अङ्गयष्टिः, तस्याः, न आसवमित्याख्या यस्य तत्, तत्, पुष्पेभ्यो व्यतिरिक्त पुष्पव्यतिरिक्त, तत् ।

३२ **उन्मीलितं तूलिकयेव चित्र**
**सूर्यांशुभिर्भिन्नमिवारविन्दम् ।**
**बभूव तस्याश्चतुरश्रशोभि**
**वपुर्विभक्तं नवयौवनेन ॥**

अन्वय – नवयौवनेन विभक्त तस्या वपु तूलिकया उन्मीलित चित्रमिव सूर्यांशुभि भिन्न अरविन्दमिव चतुरस्रशोभि बभूव ।

अर्थ — नवयौवनेन = प्रथमयौवनेन, विभक्त = अभिव्यञ्जित, तस्या = पार्वत्या, वपु = शरीर, तूलिकया = कूर्चिकया, उन्मीलित = रञ्जनद्रव्यैरुद्भासित, चित्रमिव = आलेख्यमिव, सूर्यांशुभि = सूर्यकिरणै, भिन्न = विकासित, अरविन्दमिव = पद्ममिव, चतुरस्रशोभि = अन्यूनानतिरिक्त यथा तथा शोभमान, बभूव = अभूत् ।

तात्पर्यम् — प्रथमयौवनेनाभिव्यञ्जित तस्या पार्वत्या शरीर शलाकया रञ्जनद्रव्यादिभि रुद्भासित चित्रमिव, सूर्यकिरणैर्विकासित पद्ममिव अन्यूनानतिरिक्त यथा स्यात्तथा शोभमानमभूत् ।

विग्रह — सूर्यस्य अशव, तै, चतस्र अस्रयो यस्य तत् चतुरस्र यथा तथा शोभते इति चतुरस्रशोभि । यूनो भाव यौवन, नव च तत् यौवन च नवयौवन, तेन ।

33. **अभ्युन्नताङ्गुष्ठनखप्रभाभि –**
**निक्षेपणाद्रागमिवोद्गिरन्तौ ।**
**आजह्रतुस्तच्चरणौ पृथिव्या**
**स्थलारविन्दश्रियमव्यवस्थाम् ॥**

अन्वय – अभ्युन्नताङ्गुष्ठनखप्रभाभि, निक्षेपणात रागम उद्गिरन्ताविव तच्चरणौ पृथिव्या अव्यवस्था स्थलारविन्दश्रियम् अजह्रताम् ।

अर्थ — अभ्युन्नताङ्गुष्ठनखप्रभाभि = अभ्युन्नतयो अङ्गुष्ठनखयो कान्तिभि (निमित्तेन), निक्षेपणात् = निर्भरन्यासात् हेतो, राग = अन्तर्गत रक्तवर्ण, उद्गिरन्ताविव = वमन्ताविव स्थितौ, तच्चरणौ = पार्वत्या पादौ, अव्यवस्था = एकत्रावस्थानरहिता (सञ्चारिणीमित्यर्थः), स्थलारविन्दश्रिय = स्थलपद्मशोभा, आजह्रतु = प्रापतु ।

तात्पर्यम् — उन्नतयोरङ्गुष्ठनखयो कान्तिभिर्निमित्तेन निर्भर यथा तथा भूम्या न्यासाद्धेतो रक्तवर्ण वमन्ताविव स्थितौ तस्या पार्वत्या पादौ सञ्चारिणीं स्थलपद्मश्रिय प्रापतु ।

विग्रहः — अभ्युन्नतौ च तौ अङ्गुष्ठौ च अभ्युन्नताङ्गुष्ठौ, तयो नखौ, तयो प्रभा, तानि अभ्युन्नताङ्गुष्ठनखप्रभाभि, तस्या चरणौ तच्चरणौ, स्थले अरविन्दानि, तेषा श्री, ता, न विद्यते व्यवस्था यस्या सा, ता अव्यवस्थाम् ।

31 सा राजहंसैरिव सन्नताङ्गी
गतेषु लीलाञ्चितविक्रमेषु ।

---

व्यनीयत प्रत्युपदेशलुब्धै —
रादित्सुभिर्नूपुरशिञ्जितानि ॥

अन्वयः — प्रत्युपदेशलुब्धैः नूपुरशिञ्जितानि आदित्सुभिः राजहंसैः सन्नताङ्गी सा लीलाञ्चितविक्रमेषु गतेषु व्यनीयतेव ।

अर्थः — प्रत्युपदेशलुब्धैः = प्रत्युपदेशे आसक्तैः, नूपुरशिञ्जितानि = मञ्जीरशिञ्जितोपदेशान्, आदित्सुभिः = प्राप्तुमिच्छावद्भिः, राजहंसैः = हंसश्रेष्ठैः, सन्नताङ्गी = नम्राङ्गी (कुचभारात्), सा = पार्वती, लीलाञ्चितविक्रमेषु = विलासैः पूजितपादन्यासेषु, व्यनीयत इव = विनीता किम् ।

तात्पर्यम् — राजहंसाः पार्वत्याः सकाशात् नूपुरशिञ्जितोपदेशं लब्ध्वा 'गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या चतुर्थी नोपलभ्यते ।' इति न्यायात् प्रत्युपदेशासक्ताः सन्तः तस्याः सविलासगतिप्रकारेष्वाचार्यकं वहन्ति किमु, अन्यथा कथमस्याः हंसगतिरिति भाव ।

विग्रहः — हंसानां राजानः राजहंसाः, तैः, सम्यक् नतं सन्नतं, सन्नतं अङ्गं यस्याः सा सन्नताङ्गी, लीलाभिः अञ्चिताः विक्रमाः येषु ते लीलाञ्चितविक्रमाः,

तेषु, प्रत्युपदेशे लुब्धा, तै, आदानुमिच्छन्त आश्रितमिव, तैः, नूपुराणा शिंजितानि नूपुरशिंजितानि ।

55 **वृत्तानुपूर्वे च न चातिदीर्घे**
**जघे शुभे सृष्टवतस्तदीये ।**
**शेषाङ्गनिर्माणविधौ विधातु -**
**र्लावण्य उत्पाद्य इवास यत्नः ॥**

अन्वयः – वृत्तानुपूर्वे च, न अतिदीर्घे च शुभे तदीये जघे सृष्टवत विधातुः शेषागनिर्माणविधौ उत्पाद्ये लावण्ये यत्न आस इव ।

अर्थ — वृत्तानुपूर्वे = पूर्व वर्तुले क्रमेण कृशे (गोपुच्छाकारतया) नातिदीर्घे च = अनतिदीर्घे च, शुभे = मगले, तदीये = पार्वतीसम्बन्धिन्यौ, जङ्घे = प्रसूते, सृष्टवत = निर्मितवत, विधातु = ब्रह्मण, शेषाङ्ग-निर्माणविधौ = जङ्घाभ्यतिरिक्ताङ्ग निर्माणार्थ, उत्पाद्ये = पुन सम्पाद्ये, लावण्ये = कान्तिविशेषे, यत्न = प्रयत्न, आसेव = बभूव किमु ।

तात्पर्यम् — वृत्तानुपूर्वे शुभलक्षणयुते तस्या पार्वत्या जङ्घे लावण्य सर्वमुपयोज्य ब्रह्मा सृष्टवान्, पश्चात जङ्घाभ्यतिरिक्तावयवनिर्माणार्थ सम्पाद्य यत्ला-वण्य तत्र (ब्रह्मा) यत्नवान् बभूव किमु ।

विग्रहः — वृत्ते च ते अनुपूर्वे च वृत्तानुपूर्वे, ते, अत्यन्तं दीर्घे अतिदीर्घे, तस्याः इमे तदीये, ते, शेषाणि च तानि अङ्गानि च शेषाङ्गानि, तेषां निर्माणविधिः, तस्मिन्, उत्तमेयोग्य उत्ताद्य, तस्मिन् ।

36 नागेन्द्रहस्तास्त्वचि कर्कशत्वा –
देकान्तशैत्यात्कदलीविशेषाः ।
लब्ध्वापि लोके परिणाहि रूपं
जातास्तदूर्वोरुपमानबाह्याः ॥

अन्वयः — नागेन्द्रहस्ताः त्वचि कर्कशत्वात् कदलीविशेषाः एकान्तशैत्यात् लोके परिणाहि रूपं लब्ध्वापि तदूर्वोः उपमानबाह्याः जाताः ।

अर्थः — नागेन्द्रहस्ताः = ऐरावतादीनां गजश्रेष्ठानां कराः, त्वचि = चर्मणि, कर्कशत्वात् – कर्कशत्वरूपकारणात्, कदलीविशेषाः = राजरम्भादयः कदलीवृक्षविशेषाः, एकान्तशैत्यात् = नियमशैत्याद्धेतोः, लोके = जगति, परिणाहि = वैपुल्ययुक्तम्, रूपं = आकृतिम्, लब्ध्वापि = प्राप्यापि, तदूर्वोः = तस्याः (पार्वत्याः) ऊर्वोः, उपमानबाह्याः = उपमानक्रियातीताः, जाताः = अभूवन् ।

तात्पर्यम् — पार्वत्याः ऊर्वोरुपमानक्रियायोग्याः स्तावत् ऐरावतादि गजश्रेष्ठहस्ताः, राजकदल्यश्च ।

कर्कशत्वाद्गेनो नागेन्द्रहस्ता, नित्यशैत्यस्पर्शोपात् कदली-विशेषाश्च तदूर्वोरुपमानात् बाह्यौ बभूवुः । निरुपमानौ तदूरू इत्यर्थः । तदूर्वोः न कार्कश्यं न चैकान्तशैत्यमिति भावः ।

विग्रहः — नागानामिन्द्राः, तेषां हस्ताः, कर्कशस्य भावः कर्कशत्वं, तस्मात्, शीतस्य भावः शैत्यं, एकान्तं च तत् शैत्यं च एकान्तशैत्यं, तस्मात्, कदलीनां विशेषाः कदलीविशेषाः, बहिः भवाः बाह्याः, उपमानात् बाह्याः उपमानबाह्याः ।

३७. **एतावता नन्वनुमेयशोभि**
**काञ्चीगुणस्थानमनिन्दितायाः ।**
**आरोपितं यद्गिरिशेन पश्चा -**
**दनन्यनारीकमनीयमङ्कम् ॥**

अन्वयः — अनिन्दितायाः काञ्चीगुणस्थानं एतावता ननु अनुमेयशोभि [illegible] पश्चात् गिरिशेन अनन्यनारीकमनीयं अङ्कं आरोपितं (इति) यत् ।

अर्थः — अनिन्दितायाः = अनवद्यायाः (तस्याः पार्वत्याः) काञ्चीगुणस्थानं = नितम्बबिम्बं, एतावता ननु = एतावतैव, अनुमेयशोभि = ऊह्यशोभासम्पत्तिमत् पश्चात् = तपश्चरणानन्तरं, गिरिशेन = शिवेन, अनन्यनारी-

कमनीयः = अन्यनारीभिः कामयितुमशक्यः, अङ्कः = उत्सङ्गः, आरोपितं इति यत् = अध्यारोपितमिति यत् ।

तात्पर्यम् — तपश्चर्यानन्तरं शिवेन अन्यनारीभिः कामयितुमशक्यं स्वोत्सङ्ग मारोपितमिति यत् तेनैव लिङ्गेन अनवद्यायाः तस्याः पार्वत्याः नितम्बबिम्बं अनन्य-साधारणशोभासम्पन्नमित्यूहितुं शक्यत इति भावः ।

विग्रहः — अनुमातुं योग्यं अनुमेयं, अनुमेया शोभा यस्य तत् अनुमेयशोभि, काञ्च्याः गुणः काञ्चीगुणः तस्य स्थानं काञ्चीगुणस्थानम्, न निन्दिता अनिन्दिता, तस्याः, अन्याश्च ताः नार्यश्च अन्यनार्यः, कामयितुं योग्यः कमनीयः, अन्यनारीभिः कम-नीयः, न भवतीति अनन्यनारीकमनीयम् ।

38. **तस्याः प्रविष्टा नतनाभिरन्ध्रं**
**रराज तन्वी नवरोमराजिः ।**
**नीवीमतिक्रम्य सितेतरस्य**
**तन्मेखलामध्यमणेरिवार्चिः ॥**

अन्वयः — नीवीं अतिक्रम्य नतनाभिरन्ध्रं प्रविष्टा तन्वी तस्याः नवरोम-राजिः सितेतरस्य तन्मेखलामध्यमणेः अर्चिः इव रराज ।

अर्थ — नीवी = वस्त्रग्रन्थि, अतिक्रम्य = अतीत्य, नतनाभिरन्ध्र = निम्न नाभिरन्ध्र, प्रविष्टा = प्रविशन्ती, तन्वी = सूक्ष्मा, तस्या = पार्वत्या, नवरोमराजि = नूतना रोमपङ्क्ति, सितेतरस्य = असितस्य (इन्द्रनीलस्य), तन्मेखलामध्यमणे = तस्या पार्वत्या मेखलाया मध्ये ग्रथितस्य मणे, अर्चिरिव = प्रभेव, रराज = रेजे ।

तात्पर्यम् — वस्त्रग्रन्थिमतीत्य निम्न नाभिरन्ध्र प्रविशन्ती सूक्ष्मा तस्या पार्वत्या नूतना रोमराजि तस्या पार्वत्या मेखलामध्यमणे (इन्द्रनीलस्य) नीलकान्तिरिव रराज ।

विग्रहा — नाभे रन्ध्र, नत च तत नाभिरन्ध्रं च नतनाभिरन्ध्र, तत् रोम्णा राजि रोमराजि सितादितर सितेतर, तस्य, तस्या मेखला, मध्ये चासौ मणिश्च, तन्मेखलाया मध्यमणि, तस्य तन्मेखलामध्यमणे ।

39 **मध्येन सा वेदिविलग्नमध्या**
**वलित्रयं चारु बभार बाला ।**
**आरोहणार्थं नवयौवनेन**
**कामस्य सोपानमिव प्रयुक्तम् ॥**

अन्वय — कामस्य आरोहणार्थं नवयौवनेन प्रयुक्तं सोपानं इव वेदिविलग्नमध्या सा बाला मध्येन चारु वलित्रयं बभार ।

अर्थ — कामस्य = मन्मथस्य, आरोहणार्थं = आरोहणाय, नवयौवनेन = नूतनेन लावण्येन, प्रयुक्तं = रचितं, सोपानमिव = आरोहणोपयोगि पादनिक्षेपस्थानमिव, वेदिविलग्नमध्या = परिष्कृतभूमिरिव कृशमध्या, सा बाला = पार्वती, मध्येन = मध्यभागेन, चारु = सुन्दरं, वलित्रयं = वलीनां त्रयं, बभार = धृतवती ।

तात्पर्यम् — मन्मथारोहणाय नूतनेन तारुण्येन कल्पितं सोपानपंक्तिमिव परिष्कृतभूमिरिव कृशमध्या सा बाला पार्वती मध्यभागेन वलित्रयं धृतवती ।

विग्रह — वेदिवत् विलग्नं मध्यं यस्याः सा वेदिविलग्नमध्या, वलीनां त्रयं वलित्रयं, तत् । आरोहणाय आरोहणार्थम्, नवं च तत् यौवनं च नवयौवनं, तेन ।

40. अन्योन्यमुत्पीडयदुत्पलाक्ष्या
स्तनद्वयं पाण्डु तथा प्रवृद्धम् ।
मध्ये यथा श्याममुखस्य तस्य
मृणालसूत्रान्तरमप्यलभ्यम् ॥

अन्वय — अन्योन्यम् उत्पीडयत् पाण्डु उत्पलाक्ष्याः स्तनद्वयं तथा प्रवृद्धं यथा श्याममुखस्य तस्य मध्ये यथा मृणालसूत्रान्तरमपि अलभ्यम्

**अर्थ** — अन्योन्य = परस्पर, उत्पीडयत् = उपरुन्धत्, पाण्डु = गौरवर्ण, उत्पलाक्ष्या = उत्पलपत्राक्ष्या, तस्याः = पार्वत्याः, स्तनद्वय = पयोधरयुग्म, तथा = तेन प्रकारेण, प्रवृद्ध = वृद्धि प्राप्त, श्याममुखस्य = कृष्णचूचुकस्य तस्य स्तनद्वयस्य, मध्ये = मध्यभागे यथा = येन प्रकारेण, मृणालसूत्रान्तरमपि = बिसतन्तुमात्रावकाशोऽपि, अलभ्य = लब्धुमशक्यम् (अभूत्)।

तात्पर्यम् — परस्परमुपरुन्धत् गौरवर्णयुक्त कृष्णचूचुकं च तस्याः पार्वत्याः पयोधरयुग्मं येन प्रकारेण बिसतन्तुमात्रस्यापि प्रवेशो न लभ्येत तथा प्रवृद्धम्, पीवरौ स्तनौ जाताविति तारुण्यसमृद्धिसूचनम्।

विग्रह — उत्पलमिवाक्षिणी यस्याः सा, उत्पलाक्षी, तस्याः, स्तनयोः द्वय श्याम मुखं यस्य तत्, तस्य श्याममुखस्य. मृणालस्य सूत्र, तस्य अन्तर, मृणालसूत्रान्तर, लब्धुं योग्य लभ्य, न लभ्य अलभ्यम्।

41 शिरीषपुष्पाधिकसौकुमार्यौ
बाहू तदीयाविति मे वितर्कः ।
पराजितेनापि कृतौ हरस्य
यौ कण्ठपाशौ मकरध्वजेन ॥

अन्वय — तदीयौ बाहू शिरीषपुष्पाधिकसौकुमार्यौ, इति मे वितर्कः, यौ पराजितेनापि मकरध्वजेन हरस्य कण्ठपाशौ कृतौ ।

अर्थ - तदीयौ = तस्याः पार्वत्याः सम्बन्धिनौ, बाहू = भुजौ शिरीषपुष्पाधिकसौकुमार्यौ = शिरीषपुष्पस्य यत्सौकुमार्यं (मार्दवं) तदपेक्षया अधिकसौकुमार्ययुक्तौ, इति मे वितर्कः = इति मदूहः (कुत इति चेत्), पराजितेनापि = पूर्वं निर्जितेनापि, मकरध्वजेन = मन्मथेन, यौ = पार्वत्याः बाहू, हरस्य = परमेश्वरस्य, कण्ठपाशौ = कण्ठबन्धन रज्जू, कृतौ (कण्ठालिङ्गन प्रापिताविवत्यर्थः) ।

तात्पर्यम् — तस्याः पार्वत्याः भुजौ शिरीषपुष्पादप्यधिकसौकुमार्यसम्पन्नाविति मदूहः (इति कवेर्वचनम्)। (तत्र कारणमपि कविरित्थं विशदयति) कुत इति चेत्, पराजितोऽपि मदनः तौ बाहू परमेश्वरस्य कण्ठपाशौ कृतवान् किल! (इति कारणाभ्यूहः) ।

विग्रहः — शिरीषस्य पुष्पं, सुकुमारस्य भावः सौकुमार्यं, शिरीषपुष्पादधिकं सौकुमार्यं ययोस्तौ शिरीषपुष्पाधिकसौकुमार्यौ, कण्ठस्य पाशौ कण्ठपाशौ, मकरः ध्वजे यस्य मकरध्वजः, तेन ।

42 **कण्ठस्य तस्याः स्तनबन्धुरस्य**
**मुक्ताकलापस्य च निस्तलस्य ।**

अन्योन्यशोभाजननाद्बभूव
साधारणो भूषणभूष्यभावः ॥

अन्वयः – स्तनबन्धुरस्य तस्याः कण्ठस्य निस्तलस्य मुक्ताकलापस्य च अन्योन्यशोभाजननात् भूषणभूष्यभावः साधारणः बभूव ।

अर्थः — स्तनबन्धुरस्य = स्तनाभ्यामुन्नतस्य, तस्याः = पार्वत्याः, कण्ठस्य = गलस्य, निस्तलस्य = वर्तुलस्य, मुक्ताकलापस्य च = मुक्ताभूषणस्य च, अन्योन्यशोभाजननात् = परस्पर शोभादायकत्वात् (हेतौ), भूषणभूष्यभावः = अलङ्कारालङ्कार्यभावः, साधारणः = समानः, बभूव = अभवत् ।

तात्पर्यम् — स्तनाभ्यामुन्नतस्य तस्याः पार्वत्याः कण्ठस्य वर्तुलस्य मुक्ताभूषणस्य च परस्परमलङ्कारालङ्कार्यभावः समानोऽभवत् । कण्ठस्यालङ्कारो मुक्ताभूषणं, मुक्ताकलापस्यालङ्कारः कण्ठश्चेति परस्परं शोभाधायकौ अभूतामित्यर्थः ।

विग्रहः — स्तनाभ्यां बन्धुरः, तस्य, मुक्तानां कलापः, तस्य, अन्योन्यस्य शोभा, तस्याः जननं, तस्मात्, भूषणं च भूष्यं च भूषणभूष्ये, तयोर्भावः भूषणभूष्यभावः ।

43. चन्द्रं गता पद्मगुणान्न भुङ्क्ते
पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला
द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥

अन्वयः – लोला लक्ष्मीः चन्द्रं गता पद्मगुणान् न भुङ्क्ते पद्माश्रिता (सती) चान्द्रमसीम् अभिख्याम् (न भुङ्क्ते) उमामुखं प्रतिपद्य तु द्विसंश्रयां प्रीतिम् अवाप ।

अर्थः — लोला = चपला, लक्ष्मीः = कान्त्यभिमानदेवता, चन्द्रं गता = चन्द्रं प्राप्ता सती, पद्मगुणान् = पद्मगतसौगन्ध्यादिगुणान्, न भुङ्क्ते = नानुभवति, पद्माश्रिता सती = पद्मं प्राप्ता सती, चान्द्रमसीं = चन्द्रसम्बन्धिनीं, अभिख्यां = शोभां, (न भुङ्क्ते = नानुभवति) उमामुखं = पार्वत्याः मुखं, प्रतिपद्य तु = प्राप्य तु, द्विसंश्रयां = चन्द्रपद्माश्रयणजन्यां, प्रीतिं = आनन्दं, अवाप = प्राप्तवती ।

तात्पर्यम् — चञ्चला लक्ष्मीः चन्द्रं गता सती पद्माश्रितान् सौगन्ध्यादिकान् गुणान् नानुभवति, पद्मं प्राप्ता सती चन्द्राश्रयां शोभां नानुभवति, उमामुखं तु प्राप्य कान्तिसौगन्ध्यादिसकलगुणयुक्तत्वात्तेन तदुभया-

घ्राणजन्यां प्रीतिमवाप । पार्वत्या मुखं चन्द्रवत् कान्ति-युक्तं पद्मवत् सौगन्ध्यादियुक्तं चेत्यर्थः ।

विग्रहः — पद्मस्य गुणाः, तान्, पद्मे आश्रिता, चन्द्रमस इयं चान्द्रमसी, ताम्, उमाया मुखम्, तत्, द्वे संश्रये यस्याः सा द्विसंश्रया, ताम् ।

41. पुष्पं प्रवालोपहितं यदि स्या –
न्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्याद्विशदस्य तस्या –
स्ताम्रोष्ठपर्यस्तरुचः स्मितस्य ॥

अन्वय – पुष्पं प्रवालोपहितं स्यात् यदि मुक्ताफलं वा स्फुटविद्रुमस्थं ततः विशदस्य ताम्रोष्ठपर्यस्तरुचः तस्याः स्मितस्य अनुकुर्यात् ।

अर्थ — पुष्पं = पुण्डरीकादिकं, प्रवालोपहितं = पल्लवे निहितं स्याद्यदि = यदि भवेत्, मुक्ताफलं वा = मौक्तिकं वा, स्फुटविद्रुमस्थं = निर्मले विद्रुमे स्थितं (यदि भवेत्तर्हि), विशदस्य = शुभ्रस्य, ताम्रोष्ठपर्यस्त-रुचेः = अरुणे ओष्ठे व्याप्तकान्तिमतः, तस्याः = पार्वत्याः, स्मितस्य अनुकुर्यात् = स्मितमनुकुर्यात् ।

तात्पर्यम् — पुण्डरीकादिपुष्पं पल्लवे यदि निहितं स्यात्, अथवा मुक्ताफलं निर्मलविद्रुमस्थितं वा यदि भवेत्

तदानीं अरुणाधरोष्ठव्याप्तकान्तियुक्त पार्वत्याः स्मित मनुकुर्यात्, तथा न भवेत्, अतः पार्वत्याः स्मितानुकारि वस्तु नास्त्येवेत्यर्थः ।

विग्रहः — प्रवाले उपहितं प्रवालोपहितम्, स्फुट-प्रभासौ विद्रुमश्च, स्फुटविद्रुमे तिष्ठतीति स्फुटविद्रुमस्थम्, ताम्रश्चासावोष्ठश्च, ताम्रोष्ठे पर्यस्ता रुचि यस्य तत् ताम्रोष्ठपर्यस्तरुचि तस्य ।

45 **स्वरेण तस्याममृतस्रुतेव**  
**प्रजल्पितायामभिजातवाचि ।**  
**अप्यन्यपुष्टा प्रतिकूलशब्दा**  
**श्रोतुर्वितन्त्रीरिव ताड्यमाना ॥**

अन्वय — अभिजातवाचि तस्याः अमृतस्रुता इव स्वरेण प्रजल्पितायां अन्यपुष्टा अपि ताड्यमाना वितन्त्रीरिव प्रतिकूलशब्दा (भवति) ।

अर्थ — अभिजातवाचि = मधुरभाषिण्याः, तस्याः = पार्वत्याः, अमृतस्रुतेव = अमृतस्राविणेव, स्वरेण = नादेन, प्रजल्पितायां = आलपन्त्यां सत्यां, अन्यपुष्टा अपि = कोकिला अपि, ताड्यमाना = वाद्यमाना, वितन्त्रीरिव = विषमबद्धतन्त्री वीणेव, श्रोतुः = श्रवणाभिमुखस्य जनस्य, प्रतिकूलशब्दा = कर्णकठोरनादसम्पन्ना (**भवति**) ।

तात्पर्यम् — मधुरभाषिण्या तस्या पार्वत्या अमृतस्रुतेव आत्मनो नादेन आलपन्त्या सत्या सहजमधुरनादः कोकिलोऽपि बाध्यमाना विषमबद्धतन्त्री वीणेव कर्णकठोरनादा भवति ।

विग्रहः — अमृतस्य स्रुत्, तेन, अभिजाता वाक् यस्या सा अभिजातवाक्, तस्याम्, अन्येन पुष्टा अन्यपुष्टा, प्रतिकूलः शब्दः यस्या सा प्रतिकूलशब्दा, विषमबद्धा तन्त्री यस्या, सा वितन्त्री ।

46. **प्रवातनीलोत्पलनिर्विशेष –**
**मधीरविप्रेक्षितमायताक्ष्या ।**
**तया गृहीतं नु मृगाङ्गनाभ्य –**
**स्ततो गृहीतं नु मृगाङ्गनाभिः ॥**

अन्वय – प्रवातनीलोत्पलनिर्विशेषं अधीरविप्रेक्षितं आयताक्ष्या तया मृगाङ्गनाभ्यः गृहीतं (अथ वा) मृगाङ्गनाभिः ततः गृहीतं नु ।

अर्थ — प्रवातनीलोत्पलनिर्विशेषं = प्रभूतवातस्थले विद्यमान नीलोत्पलेन सदृशं, अधीरविप्रेक्षितं = चकितविलोकनं, आयताक्ष्या = विशालनेत्रया, तया = पार्वत्या, मृगाङ्गनाभ्यः = हरिणीभ्यः, गृहीतं नु = अभ्यस्तं नु,

(अथ वा = आहोस्वित्) मृगाङ्गनाभि = हरिणीभि, तत = तस्या पार्वत्या., गृहीत नु = अभ्यस्त वा ।

तात्पर्यम् — प्रभूतवातस्थले यन्नीलोत्पल तत्सदृश चकितविलोकन विशालनयना तया पार्वत्या हरिणीभ्यो गृहीत वा आहोस्वित् तादृश चकितविलोकन हरिणीभिस्तस्या पार्वत्या स्वीकृत वा इति सन्देह. । हरिणीव चञ्चलनयना पार्वतीत्यर्थ ।

विग्रहा — प्रकृष्टो वात प्रवात, नील च तदुत्पल च नीलोत्पल, प्रवाते नीलोत्पल प्रवातनीलोत्पल, तेन निर्विशेषम्, न धीर अधीर, अधीर तद्विप्रेक्षित च अधीरविप्रेक्षितम् । आयते अक्षिणी यस्या सा आयताक्षी, तया, मृगाना अङ्गना, तास्य मृगाङ्गनास्य, मृगानामङ्गना, ताभि ।

47 **तस्या· शलाकाञ्जननिर्मितेव**
**कान्तिर्भ्रुवोरायतरेखयोर्या ।**
**तां वीक्ष्य लीलाचतुरामनङ्गः**
**स्वचापसौन्दर्यमदं मुमोच ॥**

अन्वय – आयतरेखयो तस्या भ्रुवो शलाकाञ्जननिर्मितेव या कान्ति लीलाचतुरा ता वीक्ष्य अनग स्वचापसौन्दर्यमद मुमोच ।

अर्थ — आयतरेखयो = दीर्घरेखयो, तस्या = पार्वत्या, भ्रुवो = भ्रूसम्बन्धिनी, शलाकाञ्जननिर्मितेव = शलाकया अञ्जने निर्मितेव स्थिता, या कान्ति = या च कान्तिरस्ति, लीलाचतुरा = विलाससुलभगा, ता = कान्ति, वीक्ष्य = आलोक्य, अनङ्ग = काम, स्वचापसौन्दर्यमद = स्वचापस्य यत्सौन्दर्य तेन जातो यो मद दर्प तम्, मुमोच = मन्यक्तवान् ।

तात्पर्यम् — तस्या पार्वत्या दीर्घरेखयो भ्रुवो शलाकया अञ्जनेन निर्मितेव स्थिता या कान्ति, विलासेन रमणीया ता कान्तिमालोक्य मन्मथ स्वचापसौन्दर्येण जात दर्प त्यक्तवान्, मन्मथचापातिशायिसौन्दर्योपशोभित भ्रूमती पार्वतीति भाव ।

विग्रहा — अञ्जनेन निर्मिता, शलाकया अञ्जननिर्मिता शलाकाञ्जननिर्मिता । आयता रेखा ययोस्ते आयतरेखे, तयो । लीलया चतुरा, ताम्, सुन्दरस्य भाव सौन्दर्य, स्वस्य चाप, स्वचापस्य सौन्दर्य, तेन मद तम् ।

48 लज्जा तिरश्चा यदि चेतसि स्या —
दसंशय पर्वतराजपुत्र्या ।

**न केशपाशं प्रसमीक्ष्य कुर्यु –**
**र्वालप्रियत्व शिथिल चमर्यः ॥**

अन्वय – तिरश्चा चेतसि लज्जा स्याद्यदि असशय पर्वतराजपुत्र्या त केशपाश प्रसमीक्ष्य चमर्य वालप्रियत्व शिथिल कुर्यु ।

अर्थ — तिरश्चा = तिर्यग्जातीना, चेतसि = हृदि लज्जा, स्याद्यदि = ह्रीर्यदि स्यात्, असशय = निस्सशय, पर्वतराजपुत्र्या = पार्वत्या, त = प्रसिद्ध, केशपाश = केशकलाप, प्रसमीक्ष्य = दृष्ट्वा, चमर्य = मृगीविशेषा (चमरमृगस्त्रिय), वालप्रियत्व = स्वस्ववाले प्रीति, शिथिल कुर्यु = त्यजेयु ।

तात्पर्यम — तिर्यग्जातीना चेतसि यदि लज्जा स्यात् तर्हि निस्सशय पार्वत्या केशकलाप दृष्ट्वा चमरमृगास्त्रिय स्ववाले प्रीति परित्यजेयु । यतस्ता निर्लज्जा अत एव स्ववालप्रियत्व न त्यजन्तीति भाव । चमरीवालवत्मनोहरकेशपाशवती पार्वतीति भाव ।

विग्रहा — न सशय असशय, पर्वताना राज पर्वतराज, तस्य पुत्री, तस्या पर्वतराजपुत्र्या । केशाना पाश, तम्, वाला प्रिया यासा ता वालप्रिया, वालप्रियाणा भाव वालप्रियत्व, तत् ।

49. सर्वोपमाद्रव्य समुच्चयेन
यथाप्रदेश विनिवेशितेन ।
सा निर्मिता विश्वसृजा प्रयत्ना –
देकस्थसौन्दर्यदिदृक्षयेव ॥

अन्वय – सा विश्वसृजा एकस्थसौन्दर्य दिदृक्षया इव यथाप्रदेश विनिवेशितेन सर्वोपमाद्रव्यसमुच्चयेन निर्मिता ।

अर्थ — सा = पार्वती, विश्वसृजा = ब्रह्मणा एकस्थसौन्दर्यदिदृक्षयेव = एकत्र समवेत सकलसौन्दर्य-दर्शनेच्छयेव, यथाप्रदेश - योग्यस्थानानतिक्रमात्, विनि-वेशितेन = स्थापितेन, सर्वोपमाद्रव्य समुच्चयेन = चन्द्रा-रविन्दादि निखिलोपमा द्रव्याणा समुदायेन, निर्मिता = सृष्टा ।

तात्पर्यम् — सा पार्वती ब्रह्मणा एकत्र समवेत सकलविधसौन्दर्यदर्शनेच्छयेव तत्तद्योग्यस्थानानतिक्रमात् स्थापितेन चन्द्रारविन्दादि सकलोपमाद्रव्यसमुदायेन निर्मिताभूत् ।

विग्रहः — उपमार्थानि द्रव्याणि उपमाद्रव्याणि, सर्वाणि च तानि उपाद्रव्याणि च, तेषा समुच्चय , तेन , प्रदेशमनतिक्रम्य यथाप्रदेश, विश्व सृजतीति विश्वसृत्, तेन. एकत्र तिष्ठतीति एकस्थ, सुदरस्य भाव सौन्दर्य,

एकस्थं च तत् सौन्दर्यं च तत् एकस्थसौन्दर्यं, द्रष्टुं इच्छा दिदृक्षा, एकस्थसौन्दर्यस्य दिदृक्षा, तया ।

50. **तां नारदः कामचरः कदाचि –**
**त्कन्यां किल प्रेक्ष्य पितुः समीपे ।**
**समादिदेशैकवधूं भवित्रीं**
**प्रेम्णा शरीरार्धहरां हरस्य ॥**

अन्वय – कामचरः नारदः कदाचित् पितुः समीपे कन्यां तां प्रेक्ष्य किल प्रेम्णा हरस्य शरीरार्धहरां एकवधूं भवित्रीं समादिदेश ।

अर्थ – कामचरः = स्वेच्छासञ्चरणशीलः, नारदः = नारदमहर्षिः, कदाचित् = एकदा, पितुः = जनकस्य हिमवतः, समीपे = निकटे, कन्यां = अविवाहितां, तां = पार्वतीं, प्रेक्ष्य किल = विलोक्य, प्रेम्णा = अनुरागेण, हरस्य = परमेश्वरस्य, शरीरार्धहरां = शरीरस्य अर्धभागहरां, एकवधूं = असपत्नीकां च भार्यां, भवित्रीं = भाविनीं, समादिदेश = आदिष्टवान् ।

तात्पर्यम् — स्वेच्छासञ्चारशीलो नारदमहर्षिः कदाचित् पितुर्हिमाद्रेर्निकटे कन्यकां तां पार्वतीं विलोक्य प्रेम्णा भगवतः परमेश्वरस्य शरीरार्धं पुरा हरिष्यति

असपत्नीका च भविष्यतीति ज्ञातवान्। रहसि हरस्या-र्धाङ्गहारिणी एकपत्नी च भविष्यतीत्युक्तवानिति भावः।

विग्रहः — कामं चरतीति कामचरः, एका च सा वधूश्च एकवधूः, ताम्, शरीरस्य अर्धं, तत् हरतीति शरीरार्धहरा, ताम्।

61. **गुरुः प्रगल्भेऽपि वयस्यतोऽस्या –**
**स्तस्थौ निवृत्तान्यवराभिलाषः।**
**ऋते कृशानोर्न हि मन्त्रपूत –**
**मर्हन्ति तेजास्यपराणि हव्यम्॥**

अन्वयः — गुरुः अतः अस्याः प्रगल्भे वयसि अपि निवृत्तान्यवराभिलाषः तस्थौ (तथा) हि मन्त्रपूतं हव्यं कृशानोः ऋते अपराणि तेजांसि न अर्हन्ति।

अर्थः — गुरुः = (पार्वत्याः) पिता = हिमवान्, अतः = नारदवचनात् हेतोः, अस्याः = पार्वत्याः, प्रगल्भे वयसि अपि = यौवने सत्यपि, निवृत्तान्यवराभिलाषः = (परमेशात्) अन्यस्मिन् वरविषये त्यक्ताभिलाषः सन्, तस्थौ = स्थितवान्. (तथा) हि = तद्युक्तमेव, मन्त्रपूतं = मन्त्रसंस्कृतं, हविः = आज्यादिहोमद्रव्यं, कृशानोः ऋते = अग्निं विना, अपराणि = अन्यानि, तेजांसि = सुवर्णादीनि तेजांसि, नार्हन्ति = न भजन्ति।

तात्पर्यम् — पार्वत्याः पिता हिमवान् तस्याः यौवने वयस्यपि सदृशवरान्वेषणप्रयत्नात् विरत आसीत्, तद्युक्तमेव, मन्त्रपूतं हविः कृशानुं विना इतराणि स्वर्णादितेजांसि नार्हन्ति खलु! अत नारदवाक्याद्धेतोः परमेश्वरादन्यवरान्वेषणपरो नाभूत् हिमवान् इति भावः ।

विग्रहः — अन्यश्चासौ वरश्च अन्यवरः, निवृत्तः अन्यवरे अभिलाषः यस्य सः निवृत्तान्यवराभिलाषः. मन्त्रैः पूतं मन्त्रपूतम्, हूयते इति हव्यम् ।

52. **अयाचितारं न हि देवमद्रिः**
**सुतां प्रतिग्राहयितुं शशाक ।**
**अभ्यर्थनाभङ्गभयेन साधु –**
**र्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे ॥**

अन्वयः — अद्रिः अयाचितारं देवं सुतां प्रतिग्राहयितुं न शशाक (तथा हि) साधुः अभ्यर्थनाभङ्गभयेन इष्टे अपि अर्थे माध्यस्थ्यम् अवलम्बते ।

अर्थः — अद्रिः = हिमवान्, अयाचितारं = याच्ञामकुर्वन्तं, देवं = महादेवं, सुतां = पार्वतीं, ग्राहयितुं = स्वां माहय परिग्राहयितुं, न शशाक = नोत्सेहे (तथा हि = तद्युक्तमेव), साधुः = सज्जनः, अभ्यर्थनाभङ्गभयेन =

याचनावैफल्यभीत्या, इष्टे अर्थेऽपि = स्वाभीष्टेऽप्यर्थे, माध्यस्थ्य = औदासीन्य, अवलम्बते = आश्रयति ।

तात्पर्यम् — स्वय कन्यायाचनामकुर्वन्त महादेव सुता पार्वती ग्राहयितु हिमवान् न प्रयत्नपरो बभूव, तद्युक्तमेव, सज्जन प्रार्थनावैफल्यभीत्या स्वाभीष्टेऽप्यर्थे औदासीन्यमेव भजति ।

विग्रहा — न याचिता, अयाचिता, तत्, अभ्यर्थनाया भङ्ग, तस्मात् भय, तेन, मध्ये तिष्ठतीति मध्यस्थ, तस्य भाव माध्यस्थ्य तत् ।

53. यदैव पूर्वे जनने शरीरं
सा दक्षरोषात्सुदती ससर्ज ।
तदाप्रभृत्येव विमुक्तसङ्ग
पति. पशूनामपरिग्रहोऽभूत् ।।

अन्वय — सा सुदती पूर्व जनने यदा दक्षरोषात् शरीर ससर्ज तदाप्रभृति एव पशूना पति विमुक्तसग अपरिग्रह, अभूत् ।

अर्थ — सा सुदती = सा पार्वती, पूर्वे जनने = पूर्वस्मिन् जन्मनि, यदा = तस्मिन् काले, दक्षरोषात् = स्वपितरि दक्षे कोपात्, शरीर = काय, ससर्ज = त्यक्तवती,

तदाप्रभृत्येव = तदाद्येव, पशूनां पतिः = महादेवः, विमुक्तसङ्गः = त्यक्तविषयाभिलाषः सन्, अपरिग्रहः = कलत्ररहितः, अभूत् = जातः ।

तात्पर्यम् — सा पार्वती पूर्वस्मिन् जन्मनि यदा स्वपितरि दक्षे कोपात् स्वशरीरं विससर्ज तदाद्येव परमेश्वरः परित्यक्तविषयाभिलाषः सन् कलत्ररहितः अभूत् । अन्यस्त्रीपरिग्रहोत्सुको नाभूदिति भावः ।

विग्रहः — दक्षे रोषः, तस्मात्, शोभना दन्ता यस्याः सा सुदती, विमुक्तः सङ्गः येन सः विमुक्तसङ्गः, न विद्यते परिग्रहः यस्य सः अपरिग्रहः ।

54. **स कृत्तिवासास्तपसे यतात्मा**
**गङ्गाप्रवाहोक्षितदेवदारु ।**
**प्रस्थं हिमाद्रेर्मृगनाभिगन्धि**
**किञ्चित्क्वणत्किन्नरमध्युवास ॥**

अन्वयः — कृत्तिवासाः यतात्मा सः तपसे गङ्गाप्रवाहोक्षितदेवदारु मृगनाभिगन्धि क्वणत्किन्नरं किञ्चित् हिमाद्रेः प्रस्थम् अध्युवास ।

अर्थः — कृत्तिवासाः = चर्माम्बरः, यतात्मा = नियमितचित्तः, सः = पशुपतिः, तपसे = तपोर्थं, गङ्गाप्रवाहो-

क्षित देवदारु = गङ्गाप्रवाहेण सिक्त देवदारुवृक्षवत्, मृग-नाभिगन्धि = कस्तूरिकागन्धवत्, क्वणत्किन्नर = किन्नरै क्रियमाण यद्गान तद्युक्त, किचित् = किमपि, हिमाद्रे = हिमवत, प्रस्थ = सानु, अध्युवास = अध्यतिष्ठत् (उवासेत्यर्थ )।

तात्पर्यम् — चर्माम्बर नियमितचित्तश्च स महेश्वर तपोऽनुष्ठानार्थं कमपि हिमालयस्य सानुप्रदेश मध्युवास, यत्र देवदारुतरुविशेषा गङ्गाप्रवाहेण सिक्ता सन्ति, कस्तूरिकागन्धश्च मृगाणा सञ्चारात् प्रसरति, किन्नराश्च स्वैर गायन्ति, तादृशे प्रदेश परमेश्वर स्वतपोऽनुष्ठानार्थमुवास। तत्र महादेवतपोवने गङ्गा-शीकरशीतला वायव वान्ति, कस्तूरिकागन्ध प्रसरति, किन्नरगान श्रूयते इति भाव ।

विग्रहा — कृत्ति वास यस्य स कृत्तिवासा, यत आत्मा येन स यतात्मा, गङ्गाया प्रवाह, तेन उक्षिताः देवदारव यस्मिन् तत् गङ्गाप्रवाहोक्षितदेवदारु, तत्, मृगनाभे गन्ध यस्मिन् तत् मृगनाभिगन्धि, तत्, क्वणन्त किन्नरा यस्मिन् तत् क्वणत्किन्नर, तत्।

55. **गणा नमेरुप्रसवावतसा**

**भूर्जत्वचः स्पर्शवतीर्दधानाः।**

मनश्शिला विस्फुरिता निषेदु –
शैलेयनद्धेषु शिलातलेषु ॥

अन्वय – गणा नमेरुप्रसवावतंसा स्पर्शवती भूर्जत्वच: दधाना मनश्शिला-
विस्फुरिता शैलेयनद्धेषु शिलातलेषु निषेदु ।

अर्थ — गणा = प्रमथगणा, नमेरुप्रसवावतंसा = सुरपुन्नागकुसुमशेखरा, स्पर्शवती = सुखस्पर्शा, भूर्जत्वच: = भूर्जपत्रवल्कलानि, दधाना = वसाना, मनश्शिला-विस्फुरिता = धातुविशेषैरनुलिप्ताङ्गा (सन्त), शैलेय-नद्धेषु = गन्धौषधिविशेषव्याप्तेषु, शिलातलेषु = शिला-प्रदेशेषु, निषेदु = उपविविशु ।

तात्पर्यम् — प्रमथगणा सुरपुन्नागकुसुमानि शिरसि धृत्वा सुखस्पर्शा भूर्जत्वचो वसाना धातुविशेषैरनु-लिप्ताङ्गा गन्धौषधि विशेषव्याप्तेषु शिलाप्रदेशेषु उपाविशन् ।

विग्रह: — नमेरो प्रसवा, नमेरुप्रसवा अवतंसा येषां ते नमेरुप्रसवावतंसा, भूर्जस्य त्वच. भूर्जत्वच, ता, स्पर्श आसामस्तीति स्पर्शवत्य, ता:, मनश्शिलाभि विस्फुरिता, शिलाया भव शैलेय, तेन नद्धानि, शैलेय-नद्धानि, तेषु ।

56 तुषारसङ्घातशिलाः खुराग्रैः
समुल्लिखन् दर्पकलः ककुद्मान् ।
दृष्टः कथञ्चिद्गवयैर्विविग्नै –
रसोढसिंहध्वनिरुन्ननाद ॥

अन्वय – तुषारसङ्घातशिलाः खुराग्रैः समुल्लिखन् दर्पकलः विविग्नैः गवयैः
कथञ्चित् दृष्टः ककुद्मान् असोढसिंहध्वनिः उन्ननाद ।

अर्थ — तुषारसङ्घातशिला = हिमघना एव शिला ता शिला, खुराग्रैः = शफाग्रैः, समुल्लिखन् – विदलयन्, दर्पकलः = दर्पेण मधुरध्वनिमान्, विविग्नैः = भीतैः, गवयैः = गोसदृशैर्मृगैः, कथञ्चित् = कृच्छ्रेण, दृष्टः = अवलोकित, ककुद्मान = वृषभ (नन्दी), असोढसिंहध्वनि = सिंहगर्जनमसहन्, उन्ननाद = उच्चैर्जगर्ज ।

तात्पर्यम् — शिलावद्धिमान तुषारसङ्घातान् शफाग्रैर्विदलयन् दर्पेण मधुरध्वनिमान् भीतैर्गवयैः कथमपि विलोकित वृषभराजो नन्दी सिंहगर्जन मसहन्निव उच्चैर्जगर्ज ।

विग्रहा — तुषाराणा सङ्घाता, तुषारसङ्घाता एव शिला तुषारसङ्घातशिला, ता, खुराणामग्राणि खुराग्राणि, तैः, दर्पेण कल कस्य स, दर्पकल, ककुदस्या-

रीति ककुद्मान् । सिंहस्य ध्वनि सिंहध्वनि, न सोढ असोढ, असोढ सिंहध्वनि येन स असोढसिंहध्वनि ।

57. **तत्राग्निमादाय समित्समिद्ध**
**स्वमेव मूर्त्यन्तरमष्टमूर्तिः ।**
**स्वय विधाता तपस. फलाना**
**केनापि कामेन तपश्चचार ॥**

अन्वय – तपस फलाना स्वय विधाता अष्टमूर्ति तत्र स्वमेव मूर्त्यन्तर समिद्भि समिद्ध अग्नि आधाय केनापि कामेन तप चचार ।

अर्थ — तपस फलाना = इन्द्रत्वादीना फलाना, स्वय विधाता = स्वय जनयिता (इतरकर्तृकाणा निखिल-तपसा फलप्रदातेति यावत्), अष्टमूर्ति = ईश्वर, तत्र = हिमाद्रे सानुप्रदेशे, स्व मूर्त्यन्तरमेव = स्वकीयमेव मूर्ति-भेद, समिद्भि समिद्ध = समिद्भिर्दीपित, अग्नि = कृशानु, आधाय = प्रतिष्ठाप्य, केनापि कामेन = कयापि कामनया, तप चचार = तपश्चक्रे ।

तात्पर्यम् — सर्वाणि तपासि तप्यन्ते तेषा सर्वेषा फलप्रदाता शिव तत्र हिमाद्रे सानुप्रदेशे स्वकीयाष्ट-मूर्तिषु एका मूर्ति अग्नि प्रतिष्ठाप्य त समिद्भिर्वर्धयित्वा अनिर्वचनीयेन केनापि कामेन तप चचार । 'प्रयोजन-

समनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायात् सर्वस्यापि तपस फलेन केनापि भाव्यम्, सर्वोत्कृष्टस्य महेश्वरस्य सम्प्राप्तसकलकामत्वान्नैतत्सम्भाव्यते, अत केनापि कामेन तपश्चचारेति तत्र फलस्याकीर्तनम् ।

विग्रहा — सम्यक् इद्ध समिद्ध, समिद्भि समिद्ध समित्समिद्ध, तम्, अन्या मूर्ति मूर्त्यन्तर, तत्, अष्टौ मूर्त्तय. यस्य स अष्टमूर्ति ।

59 **अनर्घ्यमर्घ्येण तमद्रिनाथः**
**स्वर्गौकसामर्चितमर्चयित्वा ।**
**आराधनायास्य सखीसमेतां**
**समादिदेश प्रयता तनूजाम् ॥**

अन्वय – अद्रिनाथ अनर्घ्यं स्वर्गौकसा अर्चित त अर्घ्येण अर्चयित्वा अस्य आराधनाय सखीभ्या समेता प्रयता तनूजा समादिदेश ।

**अर्थ** — अद्रिनाथ = हिमवान्, अनर्घ्य = अमूल्य, स्वर्गौकसा = देवाना, अर्चित = पूजनीय, त = ईश्वर, अर्घ्येण = पूजोपकरणादिद्रव्येण, अर्चयित्वा = पूजयित्वा, अस्य = ईश्वरस्य, आराधनाय = सेवार्थ, सखीसमेता = जयविजयाभ्या सखीभ्या समेता, प्रयता = नियता, तनूजा = सुता पार्वती, समादिदेश = आज्ञापयामास ।

तात्पर्यम् — अद्रिराजो हिमवान् अमूल्य देवानामपि पूजनीय (देवैरपि पूज्यमानमिति भाव) न महेश्वर पूजोपकरणादिद्रव्यवर्गः पूजयित्वा तस्य सेवार्थ स्वतनूजा पार्वती जयाविजयाख्यसखीद्वयसहिता आज्ञापयामास ।

विग्रहः — अर्घमर्हतीत्यर्घ्य, अर्घ्यो न भवतीत्यनर्घ्य, तम्, अद्रीणा नाथ, स्वर्ग ओक येषा ते स्वर्गौकस, तेषाम्, सखीभ्या समेता, ताम्, तन्वा जायत इति तनूजा, ताम् ॥

59 प्रत्यर्थिभूतामपि ता समाधे
शुश्रूषमाणा गिरिशोऽनुमेने ।
विकारहेतौ सति विक्रियन्ते
येषां न चेतांसि त एव धीराः ॥

अन्वय – गिरिश समाधे प्रत्यर्थिभूतामपि शुश्रूषमाणा ता अनुमेने, विकारहेतौ सति येषा चेतांसि न विक्रियन्ते ते एव धीरा ।

अर्थ — गिरिश = शिव, समाधे = तपस, प्रत्यर्थिभूतामपि = प्रतिपक्षभूतामपि, शुश्रूषमाणा = सेवमाना, ता = पार्वती, अनुमेने = (सेवार्थ) अङ्गीकृतवान्, विकारहेतौ सति = प्रकृतेरन्यथाकरणस्य हेतुभूते स्त्रीसन्निधानादिकारणे विद्यमानेऽपि, येषा चेतांसि =

येषां मनांसि, न विक्रियन्ते = न विकारमापद्यन्ते, त एव = ते पुरुषा एव, धीराः = धैर्यवन्तः ।

तात्पर्यम् — महेश्वरः तपसो विघ्नमपि सेवमानां तां पार्वतीं सेवार्थं मङ्गीकृतवान्, तावता महेश्वरः विकार-माप्तवानिति न तात्पर्यम् । विकारस्य हेतौ सत्यपि येषां मनांसि न विकारमापद्यन्ते त एव पुरुषा धीरा इत्युच्यन्ते। अत एव महाधीरो महेशः तपःप्रत्यर्थिभूतामपि शुश्रूष-णाय अनुमेने ।

विग्रहः — विकारस्य हेतुः विकारहेतुः, तस्मिन् ।

60. अवचितबलिपुष्पा वेदिसम्मार्गदक्षा
नियमविधिजलानां बर्हिषां चोपनेत्री ।
गिरिशमुपचचार प्रत्यहं सा सुकेशी
नियमितपरिखेदा तच्छिरश्चन्द्रपादैः ॥

अन्वयः – सुकेशी सा अवचितबलिपुष्पा वेदिसम्मार्गदक्षा नियमविधिजलानां बर्हिषां च उपनेत्री सती तच्छिरश्चन्द्रपादैः नियमितपरिखेदा प्रत्यहं गिरिशं उपचचार ।

अर्थ — सुकेशी = शोभनमूर्धजा, सा = पार्वती, अवचितबलिपुष्पा = विलूनपूजार्थकुसुमा, वेदिसम्मार्ग-दक्षा = समग्रवेदिकासम्मार्जने समर्था, नियमविधि-

जलानां = नित्यकर्मानुष्ठानार्थजलानां, बर्हिषां च = दर्भाणां च, उपनेत्री सती = आहरणशीला सती, तच्छिरश्चन्द्रपादैः = तस्य शिरसि विद्यमानस्य चन्द्रस्य किरणैः, नियमित परिखेदा = प्रशमित परिचर्याश्रमा सती, प्रत्यहं = दिने दिने, गिरिश = शिवं, उपचचार = शुश्रूषां चक्रे ।

तात्पर्यम् — शोभनपर्वजा सा पार्वती विलून-पूजार्थकुसुमा तपोवेदिका सम्मार्जनचतुरा, नित्यकर्मानुष्ठा-नार्थं जलानि दर्भांश्चाहरन्ती तस्य परमेश्वरस्य शिरसि विद्यमानस्य चन्द्रस्य किरणैः प्रशमितपरिचर्याखेदा च सती प्रत्यहं महादेवं शुश्रूषां चक्रे ।।

विग्रहः — बल्यर्थं पुष्पाणि बलिपुष्पाणि, अपचि-तानि बलिपुष्पाणि यया सा अपचितबलिपुष्पा, वेद्याः सम्मार्गः, वेदिसम्मार्गे दक्षा, नियमविधौ जलानि, तेषां अहन्यहनि प्रत्यहम्, शोभना केशा यस्याः सा=सुकेशी, नियमितः परिखेदः यस्याः सा नियमित परिखेदा, तस्य शिरः तच्छिरः, तच्छिरसि चन्द्रः, तस्य पादाः, तैः तच्छिर-श्चन्द्रपादैः ।।

इति कुमारसम्भवटीकायां प्रथमः सर्गः

# कुमारसंभवे प्रश्नाः



| | | श्लो स |
|---|---|---|
| 1) | हिमालय कुत्र कथ मस्ति? | 1 |
| 2) | हिमालय कीदृग ? | (2 त 17 पर्यन्तम्) |
| 3) | म. का कीदृशी उपयेमे ? | 18 |
| 4) | मेनका क कीदृश असूत ? | 20 |
| 5) | का शैलवधू प्रपेदे ? किमर्थम् ? | 21 |
| 6) | सतीदेवा मेनकाया कथ मुत्पन्ना ? | 22 |
| 7) | पार्वत्या जन्मदिन कथ बभूव ? | 23 |
| 8) | पार्वती कथ ववृधे ? | 25 |
| 9) | पार्वत्या नाम कथ सिद्धम् ? | 26 |
| 10) | हिमवान् पार्वत्या कथ विभूषित ? | 28 |
| 11) | पार्वती बाल्ये कथ रेमे ? | 29 |
| 12) | प्राक्तन जन्मविद्या पार्वती कथ प्रपेदिरे ? | 30 |
| 13) | पार्वत्या यौवन कीदृश मासीत् ? | (31 त 49 पर्यन्तम्) |

14) पार्वती विश्वसृजा कथं निर्मिता? 49

15) पार्वतीं प्रेक्ष्य नारदः किं समादिदेश? 50

16) पशूनां पतिः अपरिग्रहः कुतोऽभवत्? 53

17) कृत्तिवासा तपसे किं कीदृशं स्थानं मध्युवास? 54

18) प्रमथगणाः कुत्र निषेदुः? 55

19) अद्रिनाथः तनूजां किमर्थं समादिदेश? 58

20) पार्वती गिरिशं कथं मुपचचार? 60



**ससन्दर्भं विवृणुत —**

| | | श्लोकः |
|---|---|---|
| 1 | 'एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः''। | |
| 2 | 'क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसां सतीव।'' | 12 |
| 3. | नीता विवोन्माहगुणेन सम्पत् – कस्य इदं उपमानम्? | 22 |
| 4 | "अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा" प्रकृते योजयत। | 27 |

5 "साधारणो भूषणभूष्यभावः" कथं निरूपयते । 42

6 "ऋते कृशानोर्न हि मन्त्रपूतमर्हन्ति तेजांस्यपराणि हव्यम् ।" समर्थनीयं किम्? 51

7 केनापि कामेन तपश्चचार ।" का कुत्र कथम्? 57

8 विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः । 59